वेदव्यासप्रणीतम्

# आद्युपपुराणम्

( हिन्दीभाषानुवादसंवलितम् )


सम्पादकोऽनुवादकश्च

डॉ. बृजेशकुमारशुक्लः






नाग पब्लिशर्स

वेदव्यासप्रणीतम्

# आद्युपपुराणम्

(हिन्दीभाषानुवादसंवलितम्)

सम्पादकोऽनुवादकश्च
डॉ. बृजेशकुमारशुक्लः
उपाचार्यः
संस्कृतप्राकृतभाषाविभागे
लखनऊ विश्वविद्यालये,
लखनऊ




नाग पब्लिशर्स
११- ए (यू.ए.) जवाहर नगर,
दिल्ली - ११०००७
(भारत)

राष्ट्रिय संस्कृत संस्थान, नई दिल्ली के वित्तीय सहयोग से प्रकाशित।

**नाग पब्लिशर्स**

(१) ११ए-यू.ए., जवाहर नगर, दिल्ली-११०००७

(२) जलालपुर माफी (चुनार मिर्जापुर) उ.प्र.

दूरभाष : २३९६७९७५, २३९१५८३३, २३९५७४४०



ISBN 81-7081-581-9

प्रथम संस्करण २००३

मूल्य : १०६.०१

श्री सुरेन्द्र प्रताप द्वारा नाग पब्लिशर्स, ११ए., यू. ए., जवाहर नगर दिल्ली द्वारा प्रकाशित
तथा जी. प्रिंट प्रासेस, ३०८/२, शहजादा बाग, दया बस्ती, दिल्ली ११००३५ में मुद्रित।
अक्षरयोजक: मोहन कम्प्यूटर प्वाइन्ट, ८ ए (यू. ए./ ३) जवाहर नगर, दिल्ली - ११०००७.

## समर्पणम्

माननीयेभ्यः
गुरुप्रवरेभ्यः
पूज्यपादपङ्केरुहेभ्यः
आचार्यवर्येभ्यः
प्रो. अशोककुमारकालियामहोदयेभ्यः
सादरं समर्पयति

— बृजेशः

# Preface

In our Indian literature, we find eighteen Mahāpurāṇas and same number of minor purāṇas or upapurāṇas. What is the meaning of purāṇa, in this connection we have to go to Yāska's Nirukta — पुरानवं भवति' it explains that the new beliefs and codes of conduct were brought into old moulds and aroused a harmonious culture in which the new form, material and the old were amalgmated. In other way, we have to say that the Purāṇas tell us about the ancient culture, arts, Geography, literature and various other such subjects. The upapurāṇas are also important in many ways. Like purāṇas they present several stories about the gods and goddess and the mythological dynasties. In the upapuraṇas, we can also see the purāṇa's Panch Lakshaṇa — Sarga, Pratisarga, Vamsha, Manvantara and Vanshanucharita. But several upapurāṇas give the stories and glory of any one god or goddess. It is also not accurate to say that the puranas or upapurāṇas are religious text only. No doubt, there is religious matter in them, but there are many portions in the purāṇas and upapurāṇas that have nothing to do with religion. In the purāṇas and upapurāṇas there are many descriptions about geography, astrology, literature and history etc. Paurāṇic literature present the poetry of a high order of great artistic merit. Thus, we can say that they form an encyclopaedia of Indian knowledge, containing as they do, summaries of information on literature, arts, crafts, politics, grammar, architec-

ture, medicines and astrology etc. As above I have told that there are eighteen upapurāṇas. In them the first upapurāna is called Ādyupapurāṇa has been published by kshemarāja venkateshvar press from Bombay. In 1964 V.S. This upapurāṇa has been re-edited and translated into Hindi first time. The Brahma purāna is also called the Ādipurāna, but that is the Ādi Mahāpurāṇa and this is the upapurāna. The Kurma Purāna says that the chief interlocutor is Sanat Kumār — "आद्यं सनत्कुमारोक्तम्"। But here, we find Nārad and Shounaka of the Naimishāranya, as interlocutors. It is also mentioned in this upapurāṇa that it has been told by Sanatkumār first, and after this Nārad has said the Ādipurāna to Shounak —

सनत्कुमारोक्तमिदं पुराणं यतो न किञ्चित्परमस्ति पूर्वम्।
मया श्रुतं नारदतो वदर्यां श्रद्धालुना चादिपुराणसञ्ज्ञम्॥

(Ādyupapurāṇa 5.2)

It has 29 Adhyāyas and two thousand thirty six shlokas. The whole upapurāṇa describes many stories connected with life of Shrī Krishna as a supreme God. These stories have been occured from tenth skandh of Shrī Madbhāgavata and the Brahma Vaivartta purāṇa. The time of this upapurāna is told from 1203 A.D. to 1525 A.D. by Dr. R.C. Hozra. I hope that edition of this upapurāṇa would be appreciated by great scholars and Hindi translation will be also helpful to all of them.

It is a great pleasure and privilege to thank publicly some of those, who have contributed towards bringing this edition to its present form. In the first place, my great teacher Prof. Ashok Kumar Kalia Head department of Sanskrit and Prakrit Languages

of Lucknow University has infused the manuscript editing system and ideas into me to go ahead with such works. So no word seems to be adequate to express my gratitude to Prof. Kalia. I am thanking Prof. B.K. P.N.Singh, Proctor of Lucknow University who has always animated me for such academic works. I take this apportunity to reveal my gratitude to Prof. V.Kutumba Shastri Director Rāshtriya Sanskrit Sansthan Delhi and the other authorities of Sansthān too, for providing the publication grants for this upapurāṇa. I am also duty bound to acknowledge the labour put in by my research scholar Km. Abha shukla M.A. (Sanskrit) in transcribing the text for publication. I also express my thankfulness to all library authorities of Tagore library Lucknow University, Sarasvatī Bhavan Library of Sampurṇānand Sanskrit University Varanasi, Government oriental Manuscripts Library Madras and Akhil Bhāratīya Sanskrit Parishad Lucknow. Because, these libraries are so much helpful in praparing this edition. I am also thanking my students Dr. P.N. Mishra and Km. Neelam Pandey for the help in preparing the alphabetical list of the shlokas. Shri Surendra Pratap Ji, Nag Publishers, Delhi is also the place of thanks, who has timely published this upapurāṇa through the press.

Lucknow
Krishna Janmāshtami
2059 Vikram Samvat.

**Dr. Brijesh Kumar Shukla**
Reader Department of
Sanskrit and
Prakrit Languages
Lucknow University
Lucknow

of Lucknow University has infused the manuscript editing system and ideas into me to go ahead with such works. So no word seems to be adequate to express my gratitude to Prof. Kalla. I am thanking Prof. B. K. P. N. Singh, Proctor of Lucknow University who has always animated me for such academic works. I take this opportunity to reveal my gratitude to Prof. V. Kutumba Shastri Director Rashtriya Sanskrit Sansthan Delhi and the other authorities of Sansthan too, for providing the publication grants for this upapurana. I am also duty bound to acknowledge the labour put in by my research scholar Km. Abha Shukla M.A. (Sanskrit) in transcribing the text for publication. I also express my thankfulness to all library authorities of Tagore library Lucknow University, Sarasvati Bhavan Library of Sampurnanand Sanskrit University Varanasi, Government oriental Manuscripts Library Madras and Akhil Bharatiya Sanskrit Parishad Lucknow. Because these libraries are so much helpful in preparing this edition I am also thanking my students Dr. P. N. Mishra and Km. Neelam Pandey for the help in preparing the alphabetical list of the shlokas. Shri Surendra Pratap Ji, Nag Publishers, Delhi is also the place of thanks, who has timely published this upapurana through the press.

Lucknow
Krishna Janmashtami
2055 Vikram Samvat

Dr. Brijesh Kumar Shukla
Reader, Department of
Sanskrit and
Prakrit Languages
Lucknow University
Lucknow

# उपोद्धातः

अष्टादशमहापुराणानां नामानि सर्वत्र सर्वपुराणसम्मतेन तावन्त्येव प्राप्यन्ते यावन्ति पुराणेषु निर्दिश्यन्ते। क्वचित्तु शिवपुराणस्य स्थाने वायुपुराणस्य नाम वायुपुराणस्य स्थाने क्वचिच्च शिवपुराणस्य नाम महापुराणसूचीषु समुपलभ्यते। किन्तु तेषां सङ्ख्या तु सर्वत्रैवाऽष्टादश इति स्थिरीकृता। सङ्ख्यायाः विषये न क्वचिद् ग्रन्थविरोधो नापि विद्वन्मतविरोधश्च महापुराणानाम्।

परन्तूपपुराणानां सङ्ख्याविषये नामविषये च न मतैक्यम्। यद्यप्युपपुराणानां सङ्ख्याऽपि महापुराणानुसारमष्टादशैव निश्चिता किन्तु नामविषये तु नितरां विभिन्नता दृश्यते। नामवैभिन्न्यात्तेषां सङ्ख्या यत्राष्टादशेति निर्दिष्टा तन्न समीचीना प्रतिभाति। यदोपपुराणानां नामानि पृथक्पृथक्सन्दर्भेषु सदृशानि न प्राप्यन्ते तदा तेषां सङ्ख्या कथमष्टादशैव भवितुमर्हतीति विदुषां मतम्। श्रीकृष्णमणित्रिपाठिना 'पुराण[१]**पर्यालोचने**', '**अष्टादश**[२]**पुराणपरिचये**' '**पुराणतत्त्व**[३]**मीमांसायां**' च चाष्टादशेति उपपुराणसङ्ख्या स्वीकृता। '**हिन्दी विश्वकोशे**'[४] उपपुराणानां सङ्ख्याऽष्टादशेति स्थिरीकृता। रामदासगौड़महाभागैः विरचिते '**हिन्दुत्व**[५]' ग्रन्थे उपपुराणानां सङ्ख्या एकोनत्रिंशदङ्गीकृता। एच. एच. विलसनमहाभागैः स्वकीये '**विष्णुपुराणाख्य**[६] ग्रन्थे देवीभागवताद् रेवाखण्डाच्च (स्कन्दपुराणे) उपपुराणानां सूचीमादायाऽष्टादशसङ्ख्योपपुराणानां मन्यते। आर. सी हाजरामहोदयैः स्वकीये ग्रन्थे '**स्टडीज इन दि**[७] **उपपुराणाज**' नामाख्ये नानाग्रन्थेभ्य उपपुराणानां नामसूच्यः एकत्रितास्ताः परमोपादेयास्तेषामध्ययनदृष्ट्या वर्तन्ते। अनेनेदं निश्चितं यदुपपुराणानां

---

१ पुराणपर्यालोचने (प्रथमभागे) पृ. २७९

२ अष्टादशपुराणपरिचये।

३ पुराणतत्त्वमीमांसायाम्।

४ हिन्दी विश्वकोशे खण्ड २, पृष्ठ १२०

५ हिन्दुत्वे ४७ अध्याये

६ Vishnu Purāṇa (Preface) p. I iii, Iiv.

७ Studies in the upapurāṇas Vol. I, p.4 to 13.

सङ्ख्याऽनिश्चिताऽस्ति। तेषां सङ्ख्यायाःस्थिरीकरणाय महापुराणेभ्योऽन्यनानाग्रन्थेभ्य उप-पुराणानां नामसूच्योदाह्रियन्ते—

१. **स्कन्दपुराणे रेवाखण्डेऽष्टादशोपपुराणनामानि —**

"तथैवोपपुराणानि यानि चोक्तानि वेधसा।
इदं ब्रह्मपुराणस्य सुलभं सौरमुत्तमम्॥
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम्।
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता॥
सनत्कुमारनाम्ना हि तद्विख्यातं महामुने।
द्वितीयं नारसिंहं च पुराणे पाद्मसञ्ज्ञिते॥
शौकेयं हि तृतीयं तु पुराणे वैष्णवे मतम्।
वार्हस्पत्यं चतुर्थं च वायव्यं सम्मतं सदा॥
दौर्वाससं पञ्चमं च स्मृतं भागवते सदा।
भविष्ये नारदोक्तं च सूरिभिः कथितं पुरा॥
कापिलं मानवं-चैव तथैवोशनसेरितम्।
ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च॥
माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम्।
पाराशरं भागवतं कौर्मं चाष्टादशकं क्रमात्॥
एतान्युपपुराणानि मयोक्तानि यथाक्रमम्॥[१]

२. **स्कन्दपुराणे प्रभासखण्डेऽष्टादशोपपुराणनामानि —**

"आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्।
तृतीयं स्कान्दमुद्दिष्टं कुमारेणानुभाषितम्॥
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्।
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम्॥
कापिलं मानवं चैव तथैवोशनसेरितम्।
ब्रह्माण्डं वारुणं चान्यत्कालिकाह्वयमेव च॥

---

१ स्कन्द पुराणे रेवाखण्डे १.४६-५२

माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ।
पराशरोक्तं परमं मारीचं भार्गवाह्वयम् ।
एतान्युपपुराणानि कथितानि द्विजोत्तमाः ॥[१]

**३. सूतसंहितायां (स्कन्दपुराणात्) शिवमाहात्म्यखण्डेऽष्टादशोपपुराणानां नामानि —**

"अन्यान्युपपुराणानि मुनिभिः कीर्त्तितानि तु ।
आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ।
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ॥
चतुर्थंशिवधर्माख्यं दौर्वासं पञ्चमं विदुः ।
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ॥
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ।
ततो ब्रह्माण्डसञ्ज्ञं तु वारुणाख्यं ततः परम् ॥
ततः कालीपुराणाख्यं विशिष्टं मुनिपुङ्गवाः ।
ततो वासिष्ठलैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ॥
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ।
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ॥
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम् ॥[२]

**४. सौरसंहितायां (स्कन्दपुराणात्) अष्टादशोपपुराणनामानि —**

"आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥
चतुर्थं शिवधर्माख्यं पुराणं नन्दिनेरितम् ।
ततो दुर्वाससम्प्रोक्तं नारदीयं ततः परम् ॥
ततः कालीपुराणाख्यं कालखण्डं च नामतः ।
ततो वासिष्ठलिङ्गाख्यं नाम्ना माहेश्वरं त्विति ॥

---

१ स्कन्दपुराणस्य प्रभासखण्डे २.११-१५
२ सूतसंहितायाः शिवमाहात्म्यखण्डे १.१३-१८

ततः साम्बपुराणाख्यं सुसूक्ष्ममिति चेरितम् ।
ततः सौरपुराणाख्यं सावित्रमिति चेरितम् ॥

पाराशर्यं च मारीचं भार्गवं मुनिपुङ्गवाः ॥[१]

**५. पद्मपुराणे पातालखण्डेऽष्टादशोपपुराणानां नामानि —**

"तथा चोपपुराणानि कथयिष्याम्यतः परम् ।
आद्यं सनत्कुमाराख्यं नारसिंहमतः परम् ॥

तृतीयमाण्डमुद्दिष्टं दौर्वाससमथैव च ।
नारदीयमथान्यच्च कापिलं मानवं तथा ॥

तद्वदौशनसं प्रोक्तं ब्रह्माण्डं च ततः परम् ।
वारुणं कालिकाह्वानं माहेशं साम्बमेव च ॥

सौरं पाराशरं चैव मारीचं भार्गवाह्वयम् ।
कौमारं च पुराणानि कीर्तितान्यष्ट वै दश ॥"[२]

**६. देवीभागवतपुराणे प्रथमस्कन्धेऽष्टादशोपपुराणनामानि —**

"तथैवोपपुराणानि शृण्वन्तु ऋषिसत्तमाः ।
सनत्कुमारं प्रथमं नारसिंहं ततः परम् ॥

नारदीयं शिवं चैवं दौर्वाससमनुत्तमम् ।
कापिलं मानवं चैव तथा चौशनसं स्मृतम् ॥

वारुणं कालिकाख्यं च साम्बं नन्दिकृतं शुभम् ।
सौरं पाराशरप्रोक्तमादित्यं चातिविस्तरम् ॥

माहेश्वरं भागवतं वासिष्ठं च सविस्तरम् ।
एतान्युपपुराणानि कथितानि महात्मभिः[३] ॥

**७. गरुडपुराणेऽष्टादशोपपुराणानां नामानि —**

"आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥

---

१ सौरसंहितायां-स्टडीज इन दि उपपुराणाज वाल्यूम प्रथम, — आर. सी. हाजरा पृ.७

२ पद्मपुराणे पातालखण्डे ११५.९३-९७

३ देवीभागवतपुराणे १/३/१३-१६

चतुर्थं शिवधर्माख्यं स्यान्नन्दीश्वरभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ॥
कपिलं वामनं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ॥
माहेश्वरं तथा साम्बमेवं सर्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥[१]

८. **शब्दकल्पद्रुमे (गरूडपुराणात्) अष्टादशोपपुराणनामानि —**

"आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तुभाषितम् ॥
चतुर्थं शिवधर्माख्यं साक्षान्नदीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ॥
कपिलं वामनं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ॥
माहेश्वरं तथा साम्बमेवं सर्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥[२]

९. **रेवामाहात्म्ये (वायुपुराणात्) अष्टादशोपपुराणनामानि —**

"इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् ।
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ॥
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ।
सनत्कुमारनाम्नाऽपि तद्विख्यातंमहामुने ॥
द्वितीयं नारसिंहं च पुराणे पद्मसञ्ज्ञिते ।
नन्दापुराणं च तथा तृतीयं वैष्णवे मतम् ॥
चतुर्थं शिवधर्माख्यं पुराणे वायुसञ्ज्ञिते ।
दौर्वाससं पञ्चमं च स्मृतं भागवते सदा ॥

---

१ गरुडपुराणस्य पूर्वखण्डे २१५.१७-२०
२ शब्दकल्पद्रुमस्य तृतीये काण्डे पृ.१८०
(इति गारुडे २२७ अध्याय इति लिखितम्)

भविष्ये नारदोक्तं च सूरिभिः कथितं पुरा ।
कापिलं मानवं चैव तथैवोशनसेरितम् ॥
पाराशरं भागवतं कौर्मं चाष्टादशं क्रमात् ॥[१]

**१०. गोपालदासकृते भक्तिरत्नाकरे ब्रह्मवैवर्त्तपुराणमतेनाऽष्टादशोपपुराणनामानि—**

सनत्कुमारं नान्दं च नारसिंहं तथैव च ।
दौर्वाससं शैवधर्मं कापिलेयं च मानवम् ॥
शौक्रं च वारुणं चैव वासिष्ठं साम्बमेव च ।
कालीपुराणं माहेशं पाराशरं च भार्गवम् ॥
मारीचं च तथा सौरं ब्रह्माण्डाख्यं तथैव च ।
एतान्युपपुराणानि निगदन्ति पुराविदः ॥[२]

**११. वीरमित्रोदये परिभाषाप्रकाशे (ब्रह्मवैवर्त्तपुराणात्) ऽष्टादशोपपुराणनामानि—**

"आद्यं सनत्कुमारं च नारदीयं द्वितीयकम् ।
तृतीयं नारसिंहाख्यं शैवधर्मं चतुर्थकम् ॥
दौर्वासं पञ्चमं षष्ठं कापिलेयमतः परम् ।
सप्तमं मानवं प्रोक्तं शौक्रमष्टममेव च ॥
वारुणं नवमं प्राहुर्ब्रह्माण्डं दशमं स्मृतम् ।
कालीपुराणं च तत एकादशमुच्यते ॥
वासिष्ठलैङ्गं द्वादशकं माहेशं तु त्रयोदशम् ।
साम्बं चतुर्दशं प्रोक्तं सौरं पञ्चदशं स्मृतम् ॥
पाराशर्यं षोडशकं मारीचं तु ततः परम् ।
अष्टादशं भार्गवाख्यं सर्वधर्मप्रवर्त्तकम् ॥
एतान्युपपुराणानि सर्ववेदमयानि च ॥[३]

---

१ रेवामाहात्म्ये — स्ट्डीज इन दि उपपुराणाज वाल्यूम प्रथम, — आर. सी. हाजरा, पृ.८

२ गोपालदासकृते भक्तिरत्नाकरे —
'स्ट्डीज इन दि उपपुराणात् आर. सी. हाजरा, वाल्यूम I, पृ. १२

३ वीरमित्रोदये परिभाषाप्रकाशे पृ. १४

१२. **कूर्मपुराणेऽष्टादशोपपुराणानां नामानि —**

आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥

कापिलं वामनञ्चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च ॥

माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ।
पराशरोक्तं मारीचं तथैव भार्गवाह्वयम् ॥[१]

१३. **चतुर्वर्ग-चिन्तामणौ (कूर्मपुराणात्) हेमाद्रिनोक्तान्युपपुराणनामानि —**

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥

तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥

दुर्वाससोक्तमाश्चर्यंनारदोक्तमतः परम् ।
कापिलं मानवञ्चैव तथैवोशनसेरितम् ॥

ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च ।
माहेश्वरं तथा शाम्बं सौरं सर्वार्थसञ्चयम् ॥

पराशरोक्तं प्रथमं तथा भागवतद्वयम् ॥[२]

१४. **चतुर्वर्गचिन्तामणौ (कूर्मपुराणात्) हेमाद्रिनोपपुराणनामान्युक्तानि —**

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥

तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥

---

१ कूर्मपुराणे पूर्वार्द्धे १.१७-२०

२ (हेमाद्रिकृत) चतुर्वर्गचिन्तामणौ व्रतखण्डे प्रथमाध्याये पृ. २१

दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ।
कपिलं मानवं चैव तथैवोशनसेरितम् ॥

ब्रह्माण्डंवारुणं चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ॥

पराशरोक्तं प्रवरं तथा भागवतद्वयम् ।
इदमष्टादशं प्रोक्तं पुराणं कौर्मसञ्ज्ञितम् ॥[1]

**१५. नित्याचारप्रदीपे (कूर्मपुराणात्) नरसिंहवाजपेयीमहोदयेनाष्टादशोपपुराण-नामानि उद्धृतानि –**

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
अष्टादशपुराणानि श्रुत्वा सङ्क्षेपतो द्विज ॥

इत्युक्त्वा गणितं सनत्कुमारीयं, नारसिहं, नन्दीपुराणं, शिवधर्माख्यं, दुर्वासः पुराणं, नारदीयं कापिलं, वामनम्, औशनसं, ब्रह्माण्डं, वारुणं, कालिका, माहेश्वरं, शाम्बं, सौरं पराशरोक्तं मारीचं, भार्गवाख्यम् ॥[2]

**१६. वीरमित्रोदये परिभाषाप्रकाशेऽष्टादशोपपुराणानां नामानि (कूर्मपुराणात्) –**

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
अष्टादशपुराणानि श्रुत्वा सङ्क्षेपतो द्विज ॥

आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ।
तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥

कापिलं मानवं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चैव कालिकाह्वयमेव च ॥

माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥[3]

---

१ चतुवर्गचिन्तामणौ दानखण्डे ७ अध्याये

२ नरसिंहवाजपेयीकृते नित्याचारप्रदीपे प्रथमभागे पृ. १९

३ वीरमित्रोदयस्वपरिभाषाप्रकाशे प्रथमभागे (पृष्ठ १३-१४)

१७. रघुनन्दनकृते स्मृतितत्त्वे (कूर्मपुराणात्) ऽष्टादशोपपुराणनामानि —

अन्यान्युपपुराणानि मुनिभिः कथितान्यपि ॥

तानि च नरसिंहनन्द्यादित्यकालिकापुराणादीनि यथा —

आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ।
तृतीयं वायवीयं च कुमारेण च भाषितम् ॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥

नन्दिकेश्वरयुग्मञ्च तथैवोशनसेरितम् ।
कापिलं वारुणं शाम्बं कालिकाह्वयमेव ॥

माहेश्वरं तथा कल्की दैवं सर्वार्थसिद्धिदम् ।
पराशरोक्तमपरं मारीचं भास्कराह्वयम्

दैवं देवीपुराणम्[१]................. ।

१८. शब्दकल्पद्रुमे प्रथमे काण्डे (मलमासतत्त्वोद्धृतकूर्मपुराणात्) अष्टादशोपपुराणनामानि

अन्यान्युपपुराणानि मुनिभिः कथितान्यपि ।

आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ।
तृतीयं वायवीयं व कुमारेण च भाषितम् ॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥

नन्दिकेश्वरयुग्मञ्च तथैवोशनसेरितम् ।
कापिलं वारुणं शाम्बं कालिकाह्वयमेव ॥

माहेश्वरं तथा पाद्मं दैवं सर्वार्थसाधकम् ।
पराशरोक्तमपरं मारीचं भास्कराह्वयम् ॥

अत्र दैवं देवीपुराणम् ।[२]

---

१ स्मृतितत्त्वस्य प्रथमभागे मलमासतत्त्वे (पृ.७९२-७९३)

२ शब्दकल्पद्रुमे प्रथमकाण्डे, पृ. २५७

**१९. वाचस्पत्ये द्वितीये भागे (मलमांसतत्त्वोद्धृतकूर्मपुराणात्) उपपुराणनामानि—**

आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
तृतीयं वायवीयं च कुमारेणानुभाषितम् ॥
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥
नन्दिकेश्वरयुग्मं च तथैवोसनसेरितम् ।
कापिलं वारुणञ्चाथ कालिकाह्वयमेव च ॥
माहेश्वरं तथा पाद्मं दैवं सर्वार्थसाधकम् ।
पराशरोक्तमपरं मारीचं भास्कराह्वयम् ॥[१]

**२०. वाचस्पत्ये द्वितीयभागे (हेमाद्रिणोक्तकूर्मपुराणात्) ऽष्टादशोपपुराण नामानि—**

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥
तृतीयं नान्दप्रोक्तं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ।
कापिलं मानवं चैवं तथैवोशनसेरितम् ॥
ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा शाम्बं सौरं सर्वार्थसञ्चयम् ॥
पराशरोक्तमप्रवरं तथा भागवताह्वयम् ॥[२]

**२१. बृहद्धर्मपुराणे पूर्वखण्डेऽष्टादशोपपुराणानां नामानि —**

तथाप्युपपुराणानि कथयामि मुद्रा शृणु ।
आदावादिपुराणं स्यादादित्याख्यं द्वितीयकम् ॥
ततो बृहन्नारदीयं नारदीयं ततः परम् ।
नन्दिकेशपुराणं च बृहन्नन्दीश्वरं तथा ॥

---

१ वाचस्पत्ये द्वितीयभागे पृ. १२२६

२ वाचस्पत्ये (द्वितीयभागे) पृ. १२२६

शाम्बं क्रियायोगसारं कालिकाह्वयमेव च ।
ततो धर्मपुराणं च विष्णुधर्मोत्तरं तथा ॥
शिवधर्मं विष्णुधर्मं वामनं वारुणं तथा ।
नारसिंहं भार्गवं च बृहद्धर्मन्तथोत्तमम् ॥
एतान्युपपुराणानि सङ्ख्यावष्टादशैव तु ॥[1]

२२. विन्ध्यमाहात्म्ये (बृहदौशनसोपपुराणात्) ऽष्टादशोपपुराणनामानि —

सनत्कुमारं प्रथमं नारसिंहं ततः परम् ।
नारदीयं शिवं चैव दुर्गासिसन (दौर्वासस) मुत्तमम् ॥
कापिलं मानवं पुण्यं तथा चौशनसं स्मृतम् ।
गरुडं कालिकाख्यं च साम्बं नन्दिकृतं शुभम् ॥
सौरं पाराशरं प्रोक्तमादित्यं चातिविस्तरम् ।
माहेश्वरं भार्गवाख्यं वासिष्ठं च सविस्तरम् ॥[2]

२३. एकाम्रपुराणेऽष्टादशोपपुराणानां नामानि —

(१) बृहन्नारसिंहम् (२) वृहद्वैष्णवम् (३) गरुडं (४) बृहद्नारदीयं (५) नारदीयम् (६) प्रभासकम् (७) लीलावतीपुराणम् (८) देवी (९) कालिका (१०) आखेटकम् (११) बृहन्नन्दि (१२) नन्दिकेश्वरम् (१३) एकाम्रम् (१४) एकपादम् (१५) लघुभागवतम् (१६) मृत्युञ्जयम् (१७) अङ्गिरसकम् (१८) साम्बम् ।[3]

२४. पराशरोपपुराणेऽष्टादशोपपुराणनामानि —

अन्यान्युपपुराणानि चक्रुः सारतराणि वै ।
आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् ॥
नान्दाख्यं शिवधर्माख्यं दौर्वासं नारदीयकम् ।
कापिलं मानवञ्चैव तथैवोशनसेरितम् ॥
ब्रह्माणं वारुणं कालीपुराणाख्यं तथैव च ।
वाशिष्ठलैङ्गसञ्ज्ञञ्च साम्बं सौरं तथैव च ॥

---

१ बृहद्धर्मपुराणे (पूर्वखण्डे) २५.२२-२६
२ विन्ध्यमाहात्म्ये - स्ट्डीज इन दि उपपुराणात् वाल्यूम I, पृ. ११
३ एकाम्रपुराणे — स्ट्डीज इन दि उपपुराणात् वौल्यूम I, पृ. १३.

पराशरसमाख्यञ्च मारीचं भार्गवाह्वयम्[1]

२५. **वारुणोपपुराणेऽष्टादशोपपुराणनामानि —**

अन्यान्युपपुराणानि मुनयः प्रवदन्ति हि ।
आद्यं कुमारकथितं नृसिंहं नारदीयकम् ॥

वासिष्ठलैङ्गं मारीचं नान्दाख्यं भार्गवं तथा ।
माहेश्वरन्त्वौशनसमादित्यं च गणेशकम् ॥

कालियं कापिलं चैव दूर्वासं शिवधर्मकम् ।
पराशरेण कथितं साम्बं वारुणमेव च ॥[2]

२६. **मुद्गलपुराणे (एकदन्तचरिते) ऽष्टादशोपपुराणनामानि —**

गाणेशं नारदीयं च नारसिंहं च कापिलम् ।
नान्दिकेयं च वारुण्यं दौर्वाससमथाम्बिकम् ॥

कालिकेयं मारीचमौशनसं च भार्गवम् ।
सानत्कुमारकं चैव कौमारं च प्रजापते ॥

माहेश्वरं च सौरं वै पाराशर्यं च मौद्गलम् ।
अष्टादशपुराणानि कथितानि समासतः[3] ।

२७. **मधुसूदनसरस्वतीकृते प्रस्थानभेदेऽष्टादशोपपुराणानि उक्तानि —**

आद्यं सनत्कुमारेण प्रोक्तं वेदविदांवराः ।
द्वितीयं नारसिहाख्यं तृतीयं नान्दमेव च ॥

चतुर्थं शिवधर्माख्यं दौर्वाससं पञ्चमं विदुः ।
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ॥

अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ।
ततो ब्रह्माण्डसञ्ज्ञं तु वारुणाख्यं ततः परम् ॥

---

१ पराशरोपपुराणे — Descriptive Catalogue of S.MSS. in the collections of the A.S. of Bengal, — Purana No.4097.

२ वारुणोपपुराणे — Descriptive Catalogue of S.MSS. in the Gov. Ori. Manu. Library Madras.

३ मुद्गलपुराणे द्वितीयखण्डे (एकदन्तचरिते) (३४.२०-२२)

ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ।
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ॥
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम्[१] ॥

२८. **मत्स्यपुराणे चत्वार्युपपुराणनामानि —**
उपभेदान्प्रवक्ष्यामि लोके ये सम्प्रतिष्ठिताः ।
पाद्मे पुराणे यत्रोक्तं नारसिंहोपवर्णनम् ॥
तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते ।
नन्दायाः यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते ॥
नन्दीपुराणं तल्लोकैराख्यातमिति कीर्त्यते ।
यत्र साम्बं पुरस्कृत्य भविष्यति कथानकम् ॥
प्रोच्यते तत्पुनर्लोके साम्बमेतन्मुनिव्रताः ।
पुरातनस्य कल्पस्य पुराणानि विदुर्बुधाः ॥
धन्यं यशस्यमायुष्यं पुराणानामनुक्रमम् ।
एवमादित्यसञ्ज्ञा च तत्रैव परिगद्यते ॥[२]

उपपुराणस्यैताः सूच्यः पुराणोपपुराणेष्वेतरग्रन्थेषु चोपलभ्यन्ते ।आसु सूचीषु यान्युपपुराणानि निर्दिष्टानि तेषु कानिचित्प्रकाशितानि कानिचित् मातृकारूपेण पुस्तकालयेषु निहितानि कानिचिच्चाज्ञातानि केवलं नामभिरेव प्रसिद्धान्युपपुराणानि सन्ति । हाजरामहोदयोऽपि स्वकीये ग्रन्थे स्टडीज इन दि उपपुराणाज् नामाख्ये लिखितवान् —Besides the upapurānas mentioned in these lists, there were many others of which some are available in printed forms, some still exist in manuscripts, some are known only from references and quotations, and some must have been lost altogether without leaving any trace of their existence.[३]

---

१ प्रस्थानभेदे (मधुसूदनसरस्वती) पृ. १०

२ मत्स्यपुराणे ५३.६०-६३

३ Studies in the Upapurāṇas Vol. I — R.C. Hazrā. p. 13

नानाग्रन्थेभ्य उद्धृतासु सूचीषु पाठान्तरादपाठान्तराद् वोपपुराणानां नामसु क्वचित् नितरांभिन्नता क्वचिच्च स्तोकं वैभिन्न्यं दृश्यते क्वचित्तु समानत्वमपि।

एताभ्यः सूचीभ्यो गणितेन सर्वेषामुपपुराणानां सङ्ख्या त्रिषष्टिः सञ्जाता। किन्तु बृहदौशनसोपपुराणगतं विन्ध्यमाहात्म्यं मातृकारूपेणोपलभ्यते। एतदुपपुराणं कस्यांश्चित् सूच्यां न लिखितमुपलभ्यते।तदुपपुराणमपि तेषां सङ्ख्यासु गणितेनोपपुराणानां सङ्ख्या चतुःषष्टिर्भवति। इयमेवोपपुराणानां सङ्ख्या प्राप्तसूचीभिर्निश्चिता भवति। हाजरामहोदयेन स्वकीये[१] ग्रन्थे एभिरुपपुराणैः सह महापुराणातिरिक्तानां पुराणशब्दवाच्यानां सर्वेषामेवौपपुराणपुराणादीनामपि उल्लेख उपपुराणत्वेन कृतस्तदुचितमेव। अनेन उपपुराणानां सङ्ख्या शतादूर्ध्वं गता। एच. एच. विलसनमहाभागेन विष्णुपुराणे स्वकीये ग्रन्थ उपपुराणानां सङ्ख्या शतादधिकेत्युल्लिखिता —

The extensive purāṇa literature, that we have at present consists of eighteen Purāṇas and more than a hundred upapurāṇas, besides a large number of treatises claiming to belong to one or other of these works.[२]

महापुराणोपपुराणयोरतिरिक्तमन्यभेदान् ये नेच्छन्ति तेषां मतेन त्वुपपुराणानां सङ्ख्या शताधिका भवितुमर्हति। किन्तु औपपुराणादीनां भेदेषु सत्सु कथमुपपुराणसङ्ख्या शतादधिका भवितुमर्हति प्रमाणाभावात्।

उपपुराणसङ्ख्याविमर्शे महत्त्वपूर्णं वक्तव्यमिदमस्ति यत् सर्वासु सूचीषूपपुराणानां नामविषये वैभिन्न्यं दृश्यते इत्युक्तं प्रागेव। एकमेवोपपुराणं कुत्रचित् केनचिन्नाम्ना कुत्रचिच्च केनचिदपरनाम्ना प्रथितम्। यथा — सनत्कुमारोपपुराणविषये कस्यांश्चित् सूच्यां आद्योपपुराणस्य नाम्ना क्वचिच्च सनत्कुमारमिति नाम्ना प्रसिद्धम्। नारसिंहोपपुराणं क्वचित् नृसिंहमिति कथितम्। शिवधर्मं शैवधर्ममिति दौर्वाससम् आश्चर्यमित्यपरनाम्ना, नारदीयं नारदोक्तमिति, कालिकोपपुराणं कालिकेयमिति, नन्दिकेश्वरं नन्दिकेशमिति, नन्दोपपुराणं नान्दनन्दिकृतनन्दीनान्दिकेयनामभिः कथ्यते। कालीपुराणं कालियमिति बृहन्नन्दीश्वरं वृहन्नन्दिनाम्ना च प्रसिद्धम्। द्वे भागवते।

---

१ Studies in the upapurānas.

२ Vishnu Purāna — H.H. Wilson (Introduction P (a))

द्वे नन्दिकेश्वरे चोपपुराणे समुल्लिखिते स्तः। अतः इदं निश्चयं कर्तुं न शक्यते यदाद्योपपुराणं सनत्कुमारोपपुराणं चैकमेवाऽथवा तयोः पृथक्त्वमस्ति, इत्थमेव कालीकालिकोपपुराणयोरिति। एतज्ज्ञानाय तेषां मूलग्रन्था अध्येतव्या इति।

## सनत्कुमारोक्तमाद्युपपुराणम्

अष्टादशमहापुराणानन्तरं पौराणिकवाङ्मयं यदा वावर्द्धते स्म तदाऽस्य वाङ्मयस्य किञ्चिदन्यन्नामकरणं सुधीभिरपेक्षितम्। एतस्मादवशिष्टानि पुराणान्युपपुराणसञ्ज्ञया प्रसिद्धिं लेभिरे। महापुराणेषूपपुराणेषु च या खलूपपुराणानां सूची प्राप्यते, तत्र प्रायः प्रतिसूच्यामुपपुराणानां नामानि भिन्नानि समुपलभ्यन्ते। अत उपपुराणानां सङ्ख्या शतादूर्ध्वङ्गतेति पूर्वमेव निश्चितम्।[१] उपपुराणानामनन्तरमौपपुराणस्थलपुराणादिरूपेण पुराणसाहित्यं बहुत्वं वरीवर्त्ति। उपपुराणानां या सूची प्राप्यते तस्यामाद्युपपुराणस्योल्लेख आदावेव विहितः। एतदुपपुराणं सनत्कुमारोक्तमप्युच्यते। तद् यथा —

**आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्।**
**तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम्॥**
**चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्।**
**दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम्॥**
**कापिलं वामनञ्चैव तथैवोशनसेरितम्।**
**ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च॥**
**माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम्॥**
**पराशरोक्तं मारीचं तथैव भार्गवाह्वयम्॥**[२]

आद्युपपुराणं सनत्कुमारोक्तं प्राय उपपुराणानां सर्वासु सूचीषु समुपलभ्यते।[३] 'आद्युपपुराणं सनत्कुमारोक्तम्' आदिपुराणमिति नाम्नाऽप्यभिधीयते। आदिपुराणनाम्ना कतिपये ग्रन्था विद्यन्ते। तेषु द्वे आदिपुराणे प्रकाशिते स्तः।

---

१ Vishṇu Purāṇa — H.H. Wilson (Introduction P- a)

२ कूर्मपुराणे — पूर्वार्द्धे १.१७-२०

३ स्कन्दमहापुराणे रेवाखण्डे १.४७-४८. स्कन्दपुराणे प्रभासखण्डे २.११, सूतसंहितायाम्-शिवमाहात्म्यखण्डे १.१३, पद्ममहापुराणे पातालखण्डे ११५.९३ गरुडमहापुराणे पूर्वखण्डे २१५.१७

वेङ्कटेश्वरयन्त्रालयमुम्बईत आदिपुराणमेकं प्रकाशितमस्ति, यस्मिन् २९ अध्याया दरीदृश्यन्ते। कालिकातातः श्रीनवीनकृष्णलाहामहोदयेन बङ्गभाषानुवादेन सहाऽऽदिपुराणमेकं प्राकाशि। एतयोरुभयोरुपपुराणयोः २९ अध्याया एव प्राप्यन्ते। एतेष्वध्यायेषु प्रथमे चत्वारोऽध्यायाः कस्यांश्चित्पाण्डुलिपावपि नोपलभ्यन्ते। एवमत्र पञ्चविंशत्यध्याया एव सन्ति।एतदतिरिक्तमेकमादिपुराणं देवनागरीलिपौ हस्तलिखितं 'इण्डिया आफिस पुस्तकालये सुरक्षितं वर्तते। एतस्मिन्नादिपुराणे ५२ अध्यायाः कथ्यन्ते, परन्तु गणनया पुष्पिकायामेकपञ्चाशदध्याया एव निरूपिताः —'इति श्री आदिपुराणे **नारदशौनकादिसंवादे कंसवधो नामैकपञ्चाशत्तमोऽध्यायः समाप्तः।**" अस्या मातृकाया लिपिकालः १७९९ ख्रिस्ताब्दो वर्तते।[१] इण्डिया आफिस पुस्तकालये त्वुपपुराणस्यास्यैकाऽपरा मातृकाऽप्यस्ति, यस्या लिपिकालः १८०४ ख्रिष्टाब्द उल्लिखितः। मातृकाया लिपिर्देवनागरी वर्तते।[२] 'एशियाटिकसोशायटी आफ बङ्गाल' सूचीपत्रेऽस्योपपुराणस्य द्वे मातृके नागरलिपौ लिखिते स्तः। एते मातृके अपि 'इण्डिया आफिसपुस्तकालयसंरक्षितयोर्मातृकयोर्न भिन्ने प्राप्येते। कंसवधाख्याऽन्तिमापुष्पिकैकपञ्चाशदध्यायात्मिकैतयोरपि वरीवर्तते। परन्तु मातृकाया अन्तिमपुष्पिकायां **'समाप्तश्चायं पूर्वखण्ड'** इति समुल्लिखितम्।[३] अनेन ज्ञायते यदस्योपपुराणस्योत्तरखण्डोऽप्यासीत्, किन्त्वत्र स नोपलभ्यते। अस्योपपुराणस्याऽन्या मातृका अपि विभिन्नहस्तलिखितग्रन्थागारेषु दरीदृश्यन्ते[४] विस्तरभियाऽत्र सर्वा नाम्नाता इति। अल्वरूणीमहोदयेनाऽप्यस्योपपुराणस्याऽभिधानमुपपुराणसूच्यां व्यलेखि।[५]

---

१ India office catalogue (Eggeling) VI, PP.1184-85. MS. No. 3335

२ तत्रैव, MS.No. 3336

३ Asiatic Society of Bengal Catalogue (Shāstrī) V, PP. 708-709

४ Benares Sanskrit College Catalogue,PP. 329, 337, Adyār Library Catalogue, Part I, P. 159, Catalogue of Sans. Mss. in the Raghunāth Temple Library of Mahārāja of Jammu and Kāshmīr. P.199. A census of Indic Manuscripts in the United States and Canādā H.I. Poleman. P.48, R.G. Bhandārkar Report in the search for Sanskrit Manuscripts in the Bombay Presidency, P.10.

५ धर्मशास्त्र का इतिहास (चतुर्थभाग) - पी.वी.काणे, पृ.४१२.

## प्रकाशितमादिपुराणम्

वेङ्कटेश्वरमुद्रणालयमुम्बईतः कालिकातानगराच्चोभे अप्यादिपुराणे प्रकाशिते स्तः ऊनत्रिंशदध्यायात्मकमिदमुप-पुराणं 'यमलार्जुनभङ्ग'कथानकं यावदेव प्राकाश्यमुपगतम्। अन्यासुमातृकासु तत्राध्यायानां सङ्ख्यैकपञ्चाशद् विद्यते। अस्मिन् कंसवधं यावत् कृष्णचरितं दृश्यते। प्रकाशित आदिपुराणे श्रीकृष्णस्य जन्मतः प्रभृति मथुरायां यमलार्जुनभङ्गपर्यन्तं चरितमुपवर्णितमस्ति। इदमुपपुराणं सूतशौनकसंवादत्वेन लिखितं वर्तते। परन्तु पुराणेऽस्मिन् प्रोक्तं यदादिपुराणमिदं बदरिकाश्रमे नारदमुखाद् व्यासेनाऽश्रावि ततः पूर्वं चेदं सनत्कुमारेणोक्तमासीत्—

**सनत्कुमारोक्तमिदं पुराणं**
**यतो न किञ्चित्परमस्ति पूर्वम्।**
**मया श्रुतं नारदतो बदर्य्यां**
**श्रद्धालुना चाऽऽदिपुराणसञ्ज्ञम्॥**[१]

अनेन '**आद्यं सनत्कुमारोक्त**'मिति कथनं सिद्ध्यते। अत्रैकोनत्रिंशदध्यायेषु सम्मिलितानां श्लोकानां सङ्ख्या द्विसहस्रोत्तरत्रयस्त्रिंशद् वर्तते। यद्यप्रकाशितानां द्वित्रिशदध्यायानां श्लोकसङ्ख्याऽस्योपपुराणस्य योजयेत्तर्हि श्लोकानां सङ्ख्या वृद्धिं गमिष्यति। उपपुराणेऽस्मिन् श्रीकृष्णस्य लीलाः सुष्ठु चर्चिताः। इण्डिया आफिस सूचीपत्रे 'एशियाटिक सोशायटीसूचीपत्रे चोद्धृतयोर्मातृकयोः पाठालोचनपुरस्सरं चेदस्योपपुराणस्य सम्पादनं भवेत् तर्ह्यपि पुराणमिदं पूर्णतां न गच्छति पूर्वखण्डत्वेनाऽस्य स्थितेः। प्रकाशितस्योपपुराणस्य सम्पादनं कदाचिद् राजेन्द्रलालमित्रोल्लिखितमातृकानुसारं[२] नवीनकृष्णलाहामहोदयेन व्यधायि। प्रकाशितोपपुराणे यमलार्जुनभङ्गं यावदप्रकाशितोपपुराणे च कंसवधं यावद् यत्कथानकं वर्णितं तत्तु मथुरापुर्य्याः श्रीकृष्णस्य चरितं कीर्त्तितम्। द्वारावत्यां यच्छ्रीकृष्णस्य चरितं तन्नोपपुराणेनाऽनेन मनागपि स्पष्टम्। यद्यपि पुराणमिदं प्रतिज्ञापयामास यदस्मिन् श्रीकृष्णस्य मथुरावृत्तं द्वारावतीवृत्तञ्च निरूपितमासीत्।[३] परन्तु प्रकाशिताप्रकाशितयोरादिपुराणयो र्द्वारवत्यास्चरितं न दृश्यते। अनेनापि स्पष्टी-

---

१ आदिपुराणे ५.२

२ Notices of Sanskrit Manuscripts - R.L. Mitra II, PP.18-20, No.553

३ वात्सल्यादिप्रकाशाय वृन्दावनपतेर्हरेः। ततश्च मथुरालीला द्वार्वत्याश्च ततः परम्॥
(आदिपुराणे ६.२२)

भवति यदिदमुपपुराणं द्वयोः खण्डयोर्विभक्तमासीत्। पूर्वखण्डे श्रीकृष्णस्य मथुरावृत्तमुत्तरखण्डे चाऽस्य द्वारवत्या उदन्तं समाम्नातमासीत्। एशियाटिक सोशायटी आफ बङ्गाल हस्तलिखितग्रन्थसूचीपत्रे हरप्रसादशास्त्रिणाऽऽद्युपपुराणस्य पुष्पिकायां **'समाप्तश्चायं पूर्वखण्ड'** इति लिखितमित्यसूचि। एतस्मात्प्रमाणीभवति यदस्योपपुराणस्योत्तरखण्डोऽप्यवर्त्तत, किन्तु दौर्भाग्यात्सोऽद्य नोपलभ्यते। आदिपुराणमिदं 'सकलपुराणसारभूतम्'[१] इत्यध्यायपुष्पिकासु स्वकीयं व्यलिखत्। उपपुराणेऽस्मिन् मङ्गलाचरणश्लोके बाणभट्टस्य कादम्बर्याः प्रथमश्लोकस्य[२] छाया दरीदृश्यते —

**रजोजुषे जन्मनि सत्त्ववृत्तये**
**स्थितौ प्रजानां प्रलये तमः स्पृशे।**
**रवीन्दुनेत्राय च लोकसाक्षिणे**
**चिन्मात्ररूपाय परात्मरूपिणे ॥**[३]

अस्मिन्नुपपुराणे लिखितमस्ति यद् ब्रह्मसूत्रस्य भाष्यभूतं श्रीमद्भागवतपुराणं वर्तते। अस्योपपुराणस्य रचना व्यासेनैवाऽकारि। यथोक्तम् —

**तदर्थानां निर्णयाय ब्रह्मसूत्रमकल्पयत्।**
**तद्भाष्यभूतं पुराणं भागवतं वै विदुर्बुधाः ॥**
**तत्सर्वं सारभूतं हि पुराणन्त्वादिसञ्ज्ञितम्।**
**विदधे परमेशांशः व्यासरूपी सनातनः ॥**[४]

श्रीमद्भागवते राधायाः समुल्लेखो नास्ति परन्त्वादिपुराणेऽस्मिन् राधाया वर्णनं नितरां चकास्ति। ब्रह्मवैवर्त्तपुराणे वर्णितस्य राधाचरितस्य प्रभावोऽस्योपरि दरीदृश्यते। श्रीकृष्णस्य लीलानां वर्णनेऽत्र श्रीमद्भागवतस्य प्रभावो लक्षितो भवति।

---

१ इति श्रीसकलपुराणसारभूते आदिपुराणे वैयासिकेऽनुक्रमणिकाऽभिधेयः प्रथमोऽध्यायः।
(आद्युपपुराणे, पृ. २)

२ रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमः स्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥
(कादम्बर्याम्, पूर्वार्द्धे, श्लोकः १)

३ आद्युपपुराणे १.१

४ तत्रैव १.१२-१३

अत्रैकादशेऽध्याये कृष्णस्य गोपीनां नामानि राधिकाया अष्टौ सखीनां नामानि च समुल्लिखितानि । अत्र राधाया उल्लेखः पराविद्या पराशक्तिह्लादिनीशक्ति-रूपत्वेन[१] निहितः ।उपपुराणेऽस्मिन् हरेर्भक्तानां लक्षणं वर्णितं यद् ये भगवद्भक्ता अवमानिता ध्वस्तास्ताडिता पीडिता अपि विकृतिं न गच्छन्ति न च प्रतीकारमाचरन्ति, समेषां प्राणिनां हितं कुर्वन्तो दीनवत्सला अल्पभाषिणस्ते हरिभक्ता एव लोकान् पावयन्ति भगवतश्च प्रेममाध्वीकमक्षिका भूत्वा तद्भजनं समाचरन्ति । एत एव भक्ताः श्रीकृष्णप्रिया भवितुमर्हन्तीत्युक्तम्[२] । श्रीकृष्ण एव ब्रह्मेति पुराणेऽत्र निगदितम् । मनुष्याणां चेच्छिरो भगवत्पादपङ्कजे न नमति तत्तु न शिरोऽपितु भारभूतमेव । या जिह्वा हरिनाम तद्गुणान् वा न वदति सा तु दर्दुरजिह्वा वैयर्थ्यमापद्यते । भगवन्नामश्रवणरहितौ श्रवणौ कुण्डलैर्विभूषितावपि भित्तिरन्ध्रभूतौ स्तः । यौ पादौ हरिमन्दिरं न गच्छतस्तौ तु काष्ठर्निर्मिताविति ज्ञेयम् । स्वर्णकङ्कणविभूषितौ करौ चेद् भगवतः परिचर्यां न कुरुतस्तर्हि तावपि काष्ठरचितौ निर्जीवौ मन्तव्यौ सुधीभिः । ये नयने हरिसौन्दर्यं न पश्यतस्ते मयूरपक्षसदृशे व्यर्थतामुपगते ।[३] मधुवनादिद्वादशवनानां नामान्युक्त्वाऽत्र वृन्दावनस्य श्रेष्ठत्वं प्रतिपादितम् ।[४] उपपुराणेऽस्मिन् समुल्लिखितं यत्तस्मिन् काले स्त्रियः शङ्खस्य कङ्कणानि धारयामासुः ।[५] शिशूनां दृष्टिदोषनाशाय प्रेतराक्षसादिभ्यो रक्षणाय च भाले कज्जलस्य कण्ठे व्याघ्रनखस्य रामाङ्कितस्तोत्रयन्त्रस्य च विधानमत्र सम्प्राप्यते । यथा —

**दृष्टिदोषनिवाराय भाले कज्जलकं कुरु ।**
**कण्ठे व्याघ्रनखं चैव रामनामाङ्कितं स्तवम् ॥**[६]

निन्दार्थे 'गालि' शब्दस्याऽनेकत्र प्रयोगः पुराणेऽस्मिन्नुपलभ्यते ।[७] भगवतः श्रीकृष्णस्याराधनायां प्रेम्ण आवश्यकता बोभूयते न खलु

---

१ आद्युपपुराणे १३.५७-५८
२ तत्रैव ८.१६-१८.
३ तत्रैव ८.२७-३०
४ तत्रैव ९.१८-२१
५ तत्रैव २६.३,५
६ तत्रैव १८.१३०
७ तत्रैव १६.१७,२५.३३,५७

दरीदृश्यतेऽधिकारिनियमोऽत्र कश्चित्, स्त्रीशूद्रम्लेच्छपापयोनीनां सर्वेषामपि कृष्णाराधनाधिकारित्वात् —

**सर्वेऽधिकारिणो वर्णा आश्रमाः शिशवः स्त्रियः।**
**अन्त्यजा पुल्कशा म्लेच्छा ये चान्ये पापयोनयः॥**[१]

पुराणे सर्व एवाऽधिकारिणो भवन्ति।समेषां वेदेऽनधिकारित्वादेव पौराणिकवाङ्मयं सृष्टम्[२]। प्रो. आर. सी. हाजरामहोदयेनाऽवोचि यद्दिदमुपपुराणं चैतन्यसम्प्रदायावलम्बि भवितुमर्हति। तत्सम्प्रदायस्य सिद्धान्तादीनामत्र दर्शनात्।[३] कदाचिद् बङ्गदेशे रचितस्य बराहमहापुराणगतमथुरामाहात्म्यस्य प्रभावोऽस्मिन्नुपपुराणे लक्ष्यतेतराम्। एतन्मथुरामाहात्म्यं सम्प्रदायस्याऽनुयायी कश्चिदरीरचत्। गोपालभट्टेन स्वकीये '**हरिभक्तिविलासे**' आदिपुराणतो नवश्लोका उद्धारिषत।[४] लघुभागवतामृतेऽपि नवश्लोका आदिपुराणात् समुद्धृताः।[५] अन्यैर्निर्बन्धकृद्भिर्यथाऽपरार्कलक्ष्मीधराऽनिरुद्धभट्टबल्लालसेनहेमाद्रिमदनपालमाधवाचार्य -कुल्लूकभट्टशूलपाणि-गोविन्दानन्दरघुनन्दन-नरसिंहवाजपेयिगदाधराऽनन्तभट्टादिभिरस्मात्पुराणाच्छ्लोकाः स्वग्रन्थेषु नालेखिषत। श्रीकृष्णलीलानां वर्णनपरत्वादिदं वैष्णवोपपुराणं मन्यते।

## आदिपुराणस्याऽप्रकाशितोंऽशः

'एशियाटिकसोशायटी आफ बङ्गाल' हस्तलिखितग्रन्थागारे 'इण्डिया आफिस' पुस्तकालये चादिपुराणस्य या मातृका सुरक्षितास्तासु ५१ अध्यायाः प्राप्यन्ते। एषोंऽशोऽप्रकाशित एवास्ति। प्रकाशित आदिपुराणे यमलार्जुनभङ्गं यावच्छ्रीकृष्णस्य लीलाः २९ अध्यायेषु वर्णिताः। परन्त्वेतास्वादिपुराणमातृकासु प्रकाशितादिपुराणकथासातत्येन सह वत्सासुरवकासुराऽघासुरधेनुकप्रलम्बादीनां

---

१ आद्युपपुराणे २८.५२

२ स्त्रीशूद्रद्विजवन्धूनां न वेदश्रवणं मतम्।
तेषामेव हितार्थाय पुराणानि कृतानि च॥
(देवी भागवते १.३.२१)

३ Studies in the Upapuranas Vol. I, P. 289

४ हरिभक्तिविलासे, पृ. ५२४.

५ लघुभागवतामृते, पृ. १७७, १८२, १८४

रक्षसां वधः, कालियदमनम्, ब्रह्मणा विष्णुमायानुभवः, गोवर्धनोद्धारणम्, रासक्रीडा, गोपीस्तुतिः, स्वकीयादिभेदप्रदर्शनपुरस्सरं नायकनायिकाभेदवर्णनम्, कृष्णनामसङ्कीर्तनमहिमा, वसन्तग्रीष्मशरद्हेमन्तादिवर्णनम्, धेनुकादिराक्षसानां पूर्वजन्मवर्णनम्, कंसवधश्चेत्यादिविषयाः सुष्ठु प्रतिपादिताः। एतस्या मातृकायाः सम्पादनं प्रकाशनं वा नाऽद्यावधि केनचिद् विहितम्। 'इण्डिया आफिस' पुस्तकालये निहितायां मातृकायां लिखितं यदस्योपपुराणस्य वक्ता सनत्कुमारो न वर्तते —

**इदं पुराणं परमादिभूतं**
**यतो न किञ्चित्परमस्ति पूर्वम्।**
**श्रीनारदेनाभिहितं तु नैमिषे**
**श्रद्धालवे भार्गवशौनकाय**[1] ॥

प्रकाशित आदिपुराणे '**सनत्कुमारोक्तमिदं पुराण**'[2]मिति वचनं विलिखितम्। अन्यत्सर्वं प्रकाशितमादिपुराणमिव ज्ञेयम्। प्रकाशितस्यादिपुराणस्य प्रथमे चत्वारोऽध्याया आसु पाण्डुलिपिषु नोपलभ्यन्ते। प्रकाशितस्यादिपुराणस्य पञ्चमाध्यायादिदमारभ्यते। प्रकाशितस्य मातृकारूपस्य वादिपुराणस्य रचना तदाऽभूद् यदा भारतवर्षे मुश्लिमानां शासनमासीत्। एतत्सङ्केतः पुराणेऽस्मिन् स्थाने स्थाने विद्यते।[3] विभिन्नप्रमाणैर्ज्ञातुं शक्यते यदस्योपपुराणस्य कालः १२०३ खिष्टाब्दतः १५२५ खिष्टाब्दमध्येऽङ्गीकृतः।[4] प्रकाशितस्यादिपुराणस्यैवाऽयमंशो भवितुमर्हति। अस्य सम्पादनं विधाय सुधीभिः प्रकाशनीयम्। '**विष्णुनाममाहात्म्य**'मिति नाम्नी मातृका 'एशियाटिक सोशायटी बङ्गाल' पुस्तकालये सुरक्षिताऽस्ति।[5] एषा मातृकाऽप्यस्योपपुराणस्यांऽशत्वेन स्वीकर्तुं योग्येति। एतत्सर्वं संयोज्याद्युपपुराणस्य यत्कलेवरं भविष्यति तदेव स्यादाद्युपपुराणस्य वास्तविकं स्वरूपमिति।

---

१ इण्डिया आफिस कैटेलाग, भाग VI, पृ. ११८४

२ आदिपुराणे १.१

३ आदिपुराणे १४.१३९-१४०, २८.५२

४ Studies in the upapurāṇas. Vol. I, p.288.

५ Asiatic Society of Bengal Catalogue V, PP. 709-710, No. 4074, 4075

## अपरं लुप्तमाद्युपपुराणम्

धर्मशास्त्रीयनिबन्धग्रन्थेषु बहुशः समुद्धृतस्यादिपुराणस्य लुप्तत्वमेवाङ्गीकरणीयं प्रकाशितत्वेन मातृकारूपत्वेनाऽस्यानुपलब्धत्वात्।अस्योपपुराणस्य वक्ता सनत्कुमारो वरीवर्त्ति। उपपुराणेऽस्मिन् सनत्कुमारः कदाचिद् युधिष्ठिरं कथयति यत्तेन व्यासाच्छ्रुतम्। देवणभट्टेन स्मृतिचन्द्रिकायामादिपुराणाच्छ्लोका उद्धृतास्तत्र श्रोतुः सम्बोधनं महाराजराजेन्द्रकुरुनन्दनयुधिष्ठिरनामभिरुक्तम्।[१] शूलपाणेः श्राद्धविवेकेऽपि 'राजन्' शब्देन सम्बोध आदिपुराणश्लोके विहितः।[२] पराशरस्मृतिटीकायां माधवाचार्य आदिपुराणश्लोके श्रोतुः सम्बोधनं भारतपदेनाऽचीक्लपत्।[३] सनत्कुमारोऽस्योपुराणस्य वक्तैव भवितुमर्हति न च रचयिता, यतो हि 'शुद्धिकौमुद्यां'[४] हारलतायां'[५] ये श्लोका आदिपुराणादुद्धृतास्तत्र **'आदिपुराणे व्यासः'** इति पदान्युद्धृतानि। हेमाद्रिणा चतुर्वर्गचिन्तामणावादिपुराणं सनत्कुमारेणोक्तमस्तीति व्यलेखि।[६] महापुराणानां सूच्यां वायुपुराणे[७] एकमादिकपुराणमुद्धृतं यत्कदाचित्कालान्तरे आदिपुराणनाम्ना प्रसिद्धिं जगाम। बल्लालसेनेन दानसागरे[८]ऽद्भुतसागरे[९] चास्योपपुराणस्य नामोदलेखि। अल्व[१०]रुणीमहोदयेनापि यदादिपुराणं समुद्धृतं तदिदमेव भवितुमर्हति। परन्तु खेदस्य विषयोऽयं यदस्योपपुराणस्यैकाऽपि मातृकाऽद्यावधि क्वचिदपि नोपलब्धा वर्तते। निबन्धग्रन्थेषूद्धृतोद्धरणैर्ज्ञायते यदस्योपपुराणस्य कलेवरमतिविशालमासीत्।वायुपुराणे त्वादिकपुराणस्य श्लोकसङ्ख्या षट्शतोत्तरदशसहस्रात्मिका

---

१ स्मृतिचन्द्रिकायाम्, भागे V, पृ. १९४-२०१

२ श्राद्धविवेके, पृ. १३६

३ पराशरस्मृतिटीकायाम्, प्रथमे भागे (द्वितीयखण्डे) पृ. ३२६-३२७

४ शुद्धिकौमुद्याम्, पृ. ४०

५ हारलतायाम् पृ. ११७

६ चतुर्वर्गचिन्तामणौ - द्वितीयभागे (द्वितीयखण्डे) पृ. ५१८, ७६३-७६८

७ वायुपुराणे - उत्तरार्द्धे ४२.७

८ दानसागरे, पृ. ३

९ अद्भुतसागरे, पृ. २

१० Alberūmi's India - I, P.130

कथ्यते।[१]। एषा सङ्ख्या खल्वस्यादिपुराणस्य भवितुमर्हति। अस्मिन्नुपपुराणे धर्मशास्त्रविषया प्रायो वर्णिता आसन्। हारलतायामुद्धृतादिपुराणश्लोकेषु श्रौतस्मार्त्तलौकिकाग्नीनां समुल्लेखो विहितः।[२] स्मृतिचन्द्रिकायां देवणभट्टेनादि-पुराणश्लोका उदलेखिषत, येषु द्विजानामार्यावर्त्तजातानां चाऽन्यपापदेशेषु यात्रा वर्जिता। तीर्थयात्रां विना यो द्विजो दक्षिणे नर्मदां पश्चिमोत्तरे सिन्धुं पूर्वस्याञ्च करतोयां नदीं लङ्घयेत् स चान्द्रायणमकृत्वा कदापि न शुद्धयति।[३] तत्रैव निषिद्ध-देशानां परिगणनेऽप्यादिपुराणश्लोका उक्ताः।[४] सौराष्ट्रसिन्धुसौवीरमावन्त्यदक्षिणा-पथदेशान् गत्वा द्विजस्तीर्थयात्रां विना पुनः संस्कारयोग्यो भवति।[५] आदिपुराणे कथितं यत्कार्त्तयुगो धर्मः कलौ नाचरणीयः कलिजातनरनारीणां पापप्रसक्तत्वात्।[६] कृतयुगधर्मा ये न करणीयास्तेऽपि तत्रोक्ताः —

**दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः।**
**गोत्रान्मातृसपिण्डात्तु विवाहो गोवधस्तथा॥**
**नराश्वमेधौ मद्यं च कलौ वर्ज्या द्विजातिभिः॥**[७]

विवाहितायाः कन्यायाः पुनर्विवाहो ज्येष्ठांशो गोवधो भ्रातृजायोद्वाहः कमण्डलुधारणं चैतानि पञ्चकर्माणि कलौ न कुर्यात्। एतत्सर्वं स्मृतिचन्द्रिकायां

---

१ तथैवायुतसङ्ख्यातं षट्शताधिकमादिकम्।
(वायुपुराणे - उत्तरार्द्धे ४२.७)

२ आहिताग्न्योश्च दम्पत्योर्यस्त्वादौ म्रियते भुवि।
तस्या देहः सपिण्डैश्च दग्धस्त्रिभिरग्निभिः॥
पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना॥
(आदिपुराणादुद्धृतं हारलताथाम्, पृ. १४२)

३ स्मृतिचन्द्रिकायाम् (भागे. १) पृ. २०

४ तत्रैव, भागे १, पृ. २२-२३

५ सौराष्ट्रसिन्धुसौवीरमावन्त्यं दक्षिणापथम्।
एतान् देशान् द्विजो गत्वा पुनः संस्कारमर्हति॥
हिमवत्कौशिकं विन्ध्यं पारं पद्मस्य पश्चिमम्।
तीर्थयात्रां विना गत्वा पुनस्संस्कारमर्हति॥
(आदिपुराणादुद्धृतं स्मृतिचन्द्रिकायां भागे १, पृ २३)

६ स्मृतिचन्द्रिकायाम्, भागे १, पृ. २९.

७ तत्रैव, भागे १, पृ. २९

देवणभट्टेनाऽऽदिपुराणश्लोकमुद्धृत्य प्रत्यपादि।[1] परन्त्वेतच्छ्लोक एव माधवाचार्येण पराशरस्मृतिटीकायामादित्यपुराणादुद्धृतः।[2] आदिपुराणे गङ्गाक्षेत्रं तपोवनं मन्यते तत्रोक्तं यद् यत्र गङ्गानदी प्रवहति स देशस्तपोवनरूपं वर्तते। गङ्गातीरसमाश्रितानि स्थलानि सिद्धक्षेत्राणि ज्ञेयानि —
आदिपुराणेऽपि —

**यत्र गङ्गा सरिच्छ्रेष्ठा स देशस्तत्तपोवनम्।**
**सिद्धक्षेत्रं च तज्ज्ञेयं गङ्गातीरसमाश्रितम्॥**[3]

आदिपुराणेऽस्मिन् भोक्तृनियमा अपि लिखिता आसन्। शयनस्थोऽन्यासनस्थो मध्याह्ने सन्ध्ययोरुभयोर्निशीथे च कदापि द्विजो न भोजनं कुर्यात्। आर्द्रवासा आर्द्रशिरा यज्ञोपवीतरहितो यन्त्रारुढपादः सभार्यश्च कदाचनाऽन्नादिग्रहणं न विदध्यात्। शून्यागारे देवाग्निमन्दिरेऽपि द्विजो नाश्नीयात्। यो बालो मातापित्रोरुच्छिष्टं खादति स सुखी भवति।[4] अत्र भार्यया सार्धं भोजननिषेधो वरीवर्त्ति। परन्तु मार्गे ब्राह्मणभार्यया सह भोजनस्य विधानं क्वचिद् भवितुर्महति। स्वतो नीचवर्णस्त्रिया सार्धं यो नरो भुञ्जीत क्वचिदपि, स तत्क्षणात् स्वद्विजत्वं पातयति। यथोक्तम् —

**ब्राह्मण्या भार्यया सार्धं क्वचिद् भुञ्जीत वाऽध्वनि।**
**अधोवर्णस्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात्॥**[5]

आदिपुराणे शवसंस्कारादिश्मशानक्रियाणामपि समुल्लेखो विशदतयाऽऽम्नातः। हारलतायां[6] शुद्धिकौमुद्यां[7] च शवसंस्कारविषयका अनेके श्लोकाः समुद्धृता आदिपुराणाद् यदा लगुडं हस्ते गृहीत्वा श्मशानकर्मणि पिण्डार्थं जलानयनं तत्र विधीयते—

---

१ ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥
(आदिपुराणादुद्धृतं स्मृतिचन्द्रिकायाम् भागे, १, पृ. २२१)

२ पराशरस्मृतिटीकायाम्, भागे १, (द्वितीयखण्डे) पृ. ९१

३ स्मृतिचन्द्रिकायाम् भागे १, पृ. २१

४ तत्रैव, भागे १, पृ. ६१७

५ तत्रैव, भागे १, पृ. ६१८

६ हारलतायाम्, पृ. ९१, ६३-६४, १२५

७ शुद्धिकौमुद्याम्, पृ. ११०, १२८, १४५, १४६

**मृण्मयं भाण्डमादाय नवं स्नातः सुसंयतः ।**
**लगुडं सर्वदोषघ्नं गृहीत्वा तोयमानयेत् ॥**[१]

एवं श्मशानक्रियाणां विस्तरयाऽऽदिपुराणे वर्णनमासीत् । निबन्धकारैरस्योपपुराणस्य बहवः श्लोकाः समुदधारिषत विस्तरभियाऽत्र ते नाऽऽम्नाताः । अशौचादीनामपि विचार आदिपुराणे प्राप्यते तत्रोक्तं यद्यो जनोऽन्योढां नारीं भार्यात्वेन वृणुते स सर्वदाऽशुचिर्भवति । तस्य स्नानदानप्रतिग्रहकर्माणि सर्वाणि निष्फलत्वं प्राप्नुवन्ति—

**अन्यपूर्वा यस्य गेहे भार्या स्यात्तस्य नित्यशः ।**
**अशौचं सर्वकार्येषु देहे भवति सर्वदा ॥**
**दानं प्रतिगृहः स्नानं सर्वं तस्य भवेद् वृथा ॥**[२]

आदिपुराणे दानानामनुविभागतः समुल्लेख आसीदिति दानसागरे बल्लालसेनोऽङ्गीकरोति ।[३] तत्र येषूपपुराणेषु दानविधिः कीर्त्तितस्तान्युपपुराणानि बल्लालसेनः सूचीबद्धान्यचीकरत् ।[४] दानकौमुद्यामादिपुराणाद् गान्धर्वविवाहप्रसङ्गे कन्यादानसम्बन्धिश्लोकद्वयमुद्धृतम् । गान्धर्वविवाहस्य प्रशंसां कारं कारमादिपुराणकर्त्ता ब्रवीति यद्यो गान्धर्वविवाहद्वारा स्वकीयां कन्यां वराय प्रयच्छति स गन्धर्वाणां पूजनभाजनत्वमुपगच्छति । अपि च सदृशाय वराय यो जनः शुल्केन कन्यां दद्यात् स किन्नरैः सह मोदमानो गन्धर्वलोकं गच्छति । यथोक्तमादिपुराणात्—

**गान्धर्वेण विवाहेन यस्तु कन्यां प्रयच्छति ।**
**गन्धर्वलोकं व्रजति गन्धर्वैः पूज्यते नरः ।**
**शुल्केन दद्याद् यः कन्यां वराय सदृशाय च ।**
**किन्नरैः सह गीयते गन्धर्वं लोकमेति च ॥**[५]

---

१ हारलतायाम्, पृ. १६४

२ हारलतायाम्, पृ. १५

३ श्रुतान्यादिपुराणे तु दानान्यनुविभागतः ।
आचारसागरोक्तत्वान्न कीर्त्यन्तेऽत्र कृत्स्नशः ॥
(दानसागरे, पृ. ६, श्लोकः ५६)

४ उक्तान्युपपुराणानि व्यक्तदानविधीनि च ।
आद्यं पुराणं साम्बं च कालिकाह्वयमेव च ॥
नान्दमादित्यसञ्ज्ञञ्च नारसिंहं तथैव च ।
(दानसागरे, पृ. ३ श्लोकाः १२-१४)

५ दानकौमुद्याम्, पृ. ८०

आदिपुराणे व्रतपर्वणामप्युल्लेख आसीत्। हेमाद्रिणा चतुर्वर्गचिन्तामणौ युगादिविधिप्रसङ्गे नवपङ्क्तय उद्धृताः।[१] आश्विनपौर्णमासीतः कार्त्तिकपौर्णमासपर्यन्तं दीपदानविधानमपि तेनाऽऽदिपुराणादुद्धृतम्।[२] स्मृतितत्त्वे कृष्णजन्माष्टमीव्रते द्वौ श्लोकावुद्धृतौ स्तः।[३] गयातीर्थसम्बन्धिनः श्लोका आदिपुराणादुद्धृताः सन्ति।[४] एवमादिपुराणे धर्मशास्त्रविषयाश्चर्चिता इति प्राप्तोद्धरणैर्ज्ञायते। प्रायोऽनेकत्रादिपुराणोद्धरणानि ग्रन्थेषु तान्येवादित्यपुराणनाम्नोद्धृतानि। अनेन ज्ञायते यदेतयोराद्यादित्यपुराणयोः श्लोकानां कदाचित्साम्यमासीदथवा कैश्चिद् ग्रन्थकृद्भिः प्रमादादेतान्युद्धरणानि खल्वन्यपुराणनाम्ना व्यलेखिषत।

इदमादिपुराणमपि वैष्णवोपपुराणं भवितुमर्हति। यो ह्यत्र विष्णुसम्बद्धा अनेके श्लोका दरीदृश्यन्ते। अपरार्केण याज्ञवल्क्यस्मृतिटीकायां सङ्कर्षणस्योल्लेखोऽकारि। यथा—

**सङ्कर्षणं वपुर्विष्णोश्चण्डाग्निभवदाहकम्।**[५]

भगवान् विष्णुर्मनुष्यं शोकरहितं करोतीत्युक्तमपरार्केण।[६] दानसागरे विष्णोः स्नानं घृतेन कारयेदित्युक्तम् —

**घृतेन स्नपितुं विष्णुं शक्त्या सम्पूजयेत्ततः।**[७]

स्मृतितत्त्वेऽपि[८] विष्णुसम्बन्धिनः श्लोका आदिपुराणादुद्धृत्य विलिखिताः सन्ति। एवमेतदादिपुराणं वैष्णवमतप्रतिपादकमेवासीदिति निश्चप्रचं समवगम्यते। डॉ. आर. सी. हाजरामहोदयेन[९] लुप्तस्यादिपुराणस्य कालः षष्ठशताब्द्यामङ्गीकृतोऽनेकसाक्ष्यैः सुनिश्चितत्वात्।

---

१ चतुर्वर्गचिन्तामणौ (द्वितीयेभागे - द्वितीयखण्डे) पृ ५१८

२ तत्रैव (द्वितीयभागे-द्वितीयेखण्डे), पृ. ७६३-७६८

३ स्मृतितत्त्वे, भागे १, पृ.४७

४ स्मृतिचन्द्रिकायाम्, (पञ्चमेभागे) पृ. १९४-२०१

५ याज्ञवल्क्यस्मृतिटीकायाम्, पृ. ८७९

६ याज्ञवल्क्यस्मृतिटीकायाम्, पृ. ८७९

७ दानसागरे, पृ. ६१९

८ स्मृतितत्त्वे (द्वितीय भागे) पृ. ५ १२

९ Studies in the upapurānas Vol. I, p. 291

## आदिस्थलपुराणम्

उपपुराणौपपुराणानन्तरं यानि पुराणानि स्थलविशेषमाहात्म्यं वर्णयन्ति तानि स्थलपुराणनाम्नाऽभिधीयन्ते एतेषु स्थलपुराणेषु वर्तत एकमादिपुराणमपि। अस्मिन्नादिपुराणे काश्मीरदेशस्य पवित्रस्थलानां सरिताञ्च वर्णनमुपलभ्यते। जयरथस्य हरचरितचिन्तामणिग्रन्थे यादृशं वर्णनं वर्तते तद्वर्णनमनुकरोतीदं पुराणम्।[१] 'इण्डिया आफिस' हस्तलिखितग्रन्थागारे 'वितस्तास्तवः' नाम्नी मातृकाऽऽदिपुराणाद्गृहीता।[२] एषा मातृका कदाचिदेतस्मादेवाऽऽदिपुराणादुद्धृता वर्तते। एतदादिपुराणमापस्तम्बसनत्कुमारयोः संवादत्वेन लिखितमस्ति।

## शैवमादिपुराणम्

उपर्युक्तादिपुराणेभ्यो भिन्नमेकमादिपुराणमप्यासीदस्य सङ्केतः प्राप्यते। इदमादिपुराणं शैवमतस्य प्रतिपादकं भवितुमर्हति। यतो ह्यस्मिन्नादिपुराणे शिवागमस्य वर्णनमासीत् **'इति आदिपुराणे शिवागमे ओङ्कारस्तवः'** इत्युक्त्वा प्रणवप्रशंसाऽस्मादेव सङ्गृहीता वर्तते।[३] अनेनाऽस्य शैवत्वं प्रमाणीभवति। परन्त्वस्य पुराणस्य सम्बन्धे ज्ञानाभावात्किञ्चिदपि न वक्तुं शक्यते।

इत्थमुपपुराणसूचीषु प्रोक्तमादिपुराणं विभिन्नरूपेषु पौराणिकवाङ्मयमलङ्करोति स्म। एतदपि भवितुं शक्यते यदाद्युपपुराणं विशालं स्याद् यस्मिन् कृष्णचरितम्, धर्मशास्त्रवाक्यानि, काश्मीरवर्णनं शिवागमश्चेति विषया विस्तरतया वर्णिताः स्युः। कालान्तरेऽस्याधिकभागो लोपत्वमगात्। सुधीभिः श्रीकृष्णचरितात्मकमेवादिपुराणमङ्गीकृतम्। परन्तु धर्मशास्त्रीया ये विषया आदिपुराणादुद्धृतास्ते नार्वाचीनाः परिलक्ष्यन्ते। श्रीकृष्णचरितात्मकं त्वादिपुराणं तदपेक्षयाऽर्वाचीनमेव लालक्ष्यते। प्रस्तुतमाद्युपपुराणमपि पूर्णत्वं न गच्छति मातृकारूपत्वेनाऽस्यैकांशस्योपलब्धत्वात्। अत एतत्सम्पाद्य प्रकाशनीयमिति। परन्तु मातृकाऽस्य न सम्पादकेत लब्धा एक्मादिपुराणस्याऽनेकत्वं सुष्ठु प्रतीयते तद्विविधविषयाणां दर्शनात्, विभिन्ननिबन्धग्रन्थेष्वुद्धृतत्वात्तत्कालस्य पूर्वापरत्वाच्च। कदाचिच्चेत्कृत्स्नमादिपुराणमुपलभ्येत तर्ह्यवश्यमेव पौराणिकसाहित्यस्य काचिन्महोपलब्धिर्भविष्यतीति विषये विद्वांसः कृतयत्ना भवेयुरिति।

---

१ The New catalogues catalogorum (Volume Two.) द्रष्टव्यम् आदिपुराणम्।

२ India office catalogue II, Part I, PP.905-906 (Keith.)

३ The New Catalogues catalogorum (Vol. Two.) द्रष्टव्यम् आदिपुराणम्।

# विषयानुक्रमणी

*इति विषयानुक्रमणिका*

# प्रथमोऽध्यायः

**नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।।**
**देवीं सरस्वतीं चैव ततो जयमुदीरयेत्।। १ ।।**

नरोत्तम, नर, नारायण और देवी सरस्वती को प्रणाम करके जय शब्द का उच्चारण करना चाहिए।

**रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमः स्पृशे।।**
**रवीन्दुनेत्राय च लोकसाक्षिणे चिन्मात्ररूपाय परात्मरूपिणे।। १ ।।**

जो प्रजा की सृष्टि के समय में रजोगुण स्थिति अर्थात् परिपालन में सत्त्ववृत्ति वाले और प्रलय के समय में तमोगुण का स्पर्श करते हैं, सूर्य और चन्द्रमा रूप दो नेत्र वाले चिन्मात्ररूप परात्मरूप तथा लोकसाक्षी ईश्वर को प्रणाम करता हूँ।

**ब्रह्मेति यस्य निगमैर्विवृतश्चिदंशो मायेश्वरः पुरुषरूपधरो यदंशः।।**
**प्राणोदको बलधियां परमो विशुद्धः आनन्दसत्यवपुषे प्रणमामि तस्मै।**

शास्त्रों ने जिसके चिदंश को ब्रह्मरूप कहा है, जो मायेश्वर अपने अंश से पुरुषरूप धारण करता है। बलवद् बुद्धियों में प्राणसञ्जीवन, परम विशुद्ध और आनन्दसत्य शरीर वाले को प्रणाम करता हूँ।

**जीवो रहस्येव विधाय पापं न निष्कृतिं प्रैति हि विश्वमूर्त्तेः।।**
**सदात्मरूपोऽन्तरतो हि शश्वत् पापञ्च पश्यत्यथ पुण्यकृत्यम्।। ३ ।।**

यदि मनुष्य छिपकर भी पाप कर ले तो विश्वमूर्त्ति से निष्कृति नहीं प्राप्त करता है क्योंकि, जो सदा आत्मरूप अन्तःकरण में स्थित वह निरन्तर पाप और पुण्यों को देखता है।

**पापात्मभिस्तन्निभृते कृतेऽपि पापेऽनुतापानलतस्त एव।।**
**दग्धा भवेयुः सततं नु येन नमामि तं सत्पुरुषं परेशम्।। ४ ।।**

इसी कारण वे पापात्माओं में छिपाकर पाप करने से अनुतापरूप प्रबल अग्नि में जिनके प्रताप से वही दग्ध हो जाते है ऐसे परात्पर सत्पुरुष नारायण को नमस्कार करता हूँ।

अप्राकृतगुणैः पूर्णो नित्यास्त्रपार्षदैर्युतः ॥
प्रेयसीभिर्वयस्यैश्च तथा नित्यपुरे स्थितः ॥ २७ ॥

इनके चौंसठ अप्राकृत गुण हैं, वे नित्य आयुध और पार्षदों से युक्त हैं, और प्रिय मित्रों तथा प्रेयसियों सहित नित्यपुर में विराजमान है।

उपकाराय जीवानां भावानुकरणेन हि ॥
भगवद्भक्तिसाफल्यं लीलायां प्रकटीकृतम् ॥ २८ ॥

साधारण जीवों के उपकार के लिए अपने स्वभाव के अनुसार भगवान् की भक्ति का साफल्य उनकी लीला में प्रकाशित हुआ है।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके सूतशौनकसंवादे षष्ठोऽध्यायः ॥६ ॥*

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में षष्ठ अध्याय समाप्त ॥६ ॥*

# सप्तमोऽध्यायः

*सूत उवाच*

**स्त्रिया मोहिकया के न निहता भुवनत्रये ।।**

**कच्छो यथा ज्वलद्वह्निं दृष्ट्वैवोल्लसितो भवेत् ।। १ ।।**

सूत जी बोले कि, ऐसा इस त्रैलोक्य में कौन है जो स्त्रियों की मोहिनी शक्ति से मोहित होकर नाश को प्राप्त न हुआ हो, कच्छ अर्थात् झिल्ली कीड़ा जिस प्रकार अग्नि को प्रज्वलित देखकर प्रफुल्लित होता है।

**दाहदुःखं न जानाति स्त्रियं दृष्ट्वा तथा पुमान् ।।**

**देहं मूत्रपुरीषैश्च पूरितं मन्यते वरम् ।। २ ।।**

पुरुष स्त्री को देखकर दाहजनित दुःख का अनुभव नहीं करता, मलमूत्र से युक्त देह को श्रेष्ठ जानता है।

**मेदोऽस्थिरक्तमज्जाढ्यं रमते तत्र मोहितः ।।**

**यथा विष्ठासमुद्भूतः कीटस्तत्रैव मोदते ।। ३ ।।**

मेद, मज्जा रक्त और हड्डियों से युक्त देह को श्रेष्ठ जानता है, और मोहित होकर उसमें रत रहता है, जैसे विष्ठा से उत्पन्न हुआ कीड़ा विष्ठा में ही आनन्दित रहता है।

**तथापवित्रे स्त्रीदेहे मोदते मोहितो भृशम् ।।**

**तदर्थं दुःखमाप्नोति सुखवन्मन्यते गृहे ।। ४ ।।**

इस प्रकार अत्यधिक मोहित होकर अपवित्र स्त्री शरीर में रत होकर प्रसन्न रहता है। इसके लिए उसे दुःख मिलता है परन्तु वह घर में अपने को सुखी मानता है।

**धनार्जने परं यत्नं करोत्यशुभकर्म च ।।**

**तृष्णाया भववाहिन्या जगद्भूता इतस्ततः ।। ५ ।।**

**प्रधावन्ति मूढधियो ह्यनिशं धनकाङ्क्षया ।।**

**प्रियान्प्राणाननादृत्य समुच्छ्राम्यति मूढधीः ।। ६ ।।**

वह धन के पैदा करने में बहुत श्रम और विविध प्रकार के बुरे कर्मों को करता है, संसार में चरने वाली तृष्णा से चलायमान होकर संसार में निर्बुद्धि मनुष्य धन की इच्छा से निरन्तर इधर उधर घूमता है और अपने प्रियप्राणों को तुच्छ जानकर वह मूर्ख परिश्रम करता है

**हिताहितं न जानाति नैहिकं पारलौकिकम् ।**

**तृष्णानीहारनष्टाक्षो न जानाति वयो गतम् ।।७ ।।**

परन्तु इस लोक और परलोक में किस वस्तु से अमङ्गल वा अमङ्गल होगा उसको नहीं जानता है। तृष्णा रूपी कुहरे से नष्ट दृष्टि वाला वह यह भी नहीं जानता है कि कितनी आयु व्यतीत हुई है।

**न बन्धुर्न पिता माता च तस्य स्त्री सहोदरः ।।**

**एकमेव परं वित्तं नान्यं किञ्चन संसृतौ ।। ८ ।।**

उसके समीप पिता, माता, स्त्री, भाई और कुटुम्ब ये कुछ भी नहीं हैं, केवल संसार में एकमात्र धन ही उसकी परमवस्तु है।

**यदर्थं त्यजति प्राणान्पितृमातृसहोदरान् ।।**

**सत्यं धर्मं दयां मैत्रीं न धनाशां कथञ्चन ।। ९ ।।**

वह अर्थ के लिए पिता, माता, सहोदर, सत्य, धर्म, दया, मैत्री, इन सबको छोड़ सकता है अपने प्राण भी दे सकता है, परन्तु धन की आशा किसी प्रकार से भी कम नहीं होती।

**मानापमानं गणयेन्नैव भावि शुभाशुभम् ।।**

**इच्छते धनमेवैकं कृत्वाप्यधमसेवनम् ।। १० ।।**

मान, अपमान तथा भावी शुभ और अशुभ इनको कुछ नहीं गिनता, नीचों की सेवा करने से भी एकमात्र धन के मिलने की ही कामना करता हैं।

**पोष्याः पुत्रकलत्राद्या देयमेभ्यः सुखं पुनः ।।**

**न सदर्थे स्ववित्तस्य करोति कुमतिर्व्ययम् ।। ११ ।।**

स्त्री पुत्रों का पालन करना है, इसी विचार से उनको सुख देने की इच्छा करता है, परन्तु श्रेष्ठ कार्य में वह निर्बुद्धि मनुष्य धन का व्यय नहीं करता है।

**न साधुभ्यो धनं किञ्चिद्दातुमुत्सहतेऽबुधः ॥**
**देवे दत्तमक्षयं स्यात्परत्रेह शुभं यथा ॥ १२ ॥**

वह मूर्ख साधुओं को किञ्चित् धन देने की इच्छा नहीं करता, देवताओं के निमित्त कोई भी वस्तु दान करने से उसका फल अक्षय होता है, इस लोक और परलोक में मङ्गल कारक होने पर भी ऐसे सफल दान में भी उसकी इच्छा नहीं होती।

**यदि न स्याद्गृहे वित्तं विवाहाद्यर्थसिद्धये ॥**
**ऋणेनापि च कुर्वन्ति प्रतिष्ठार्थं जनेषु हि ॥ १३ ॥**

विवाह इत्यादि प्रयोजनीय कार्यों के निमित्त चाहे घर में धन न हो परन्तु समाज में प्रतिष्ठा के लिए कर्ज लेकर ऐसे कार्य करते हैं।

**बन्धुष्वासक्तचित्तस्य न पोषणपरस्य च ॥**
**अहर्निशं क्लेशवतः कुतो ज्ञानं कुतः सुखम् ॥ १४ ॥**

अपने कुटुम्बियों में आसक्त चित्त वाला तथा दूसरे का पोषण न करने वाला क्लेश को भोगनेवाला मनुष्य यह कभी नहीं जानता कि, किधर ज्ञान है और कहाँ सुख है।

**ज्ञात्वाथ धर्मकर्माणि तदर्थं क्लिश्यते भृशम् ॥**
**न ददाति न भुङ्क्ते च जातेऽपि धनसञ्चये ॥ १५ ॥**

यदि कदाचित् धर्म कार्य में जानकर कुछ धन व्यय हो गया हो तो अत्यधिक उसके लिए क्लेश भोगता रहता है, धन का सङ्ग्रह होने पर भी धन को न कभी भोगता है न कभी दान करता है।

**न करोति हरेर्भक्तिं न दानं साधुसङ्गमम् ॥**
**न तीर्थयात्रां कृपणः कुटुम्बासक्तमानसः ॥ १६ ॥**

कुटुम्ब में आसक्त हुआ मनुष्य विष्णु की भक्ति, दान, साधुओं की सङ्गति और तीर्थों की यात्रा, यह कुछ भी नहीं करता है।

**कुर्व्वन्तं विष्णुभक्त्यादि परं चोपहसत्यसौ ॥**
**निःस्नेहोऽयं चासमर्थो न पुष्णाति स्वबान्धवान् ॥ १७ ॥**

यदि कोई मनुष्य श्री भगवान् की भक्ति करता है, तो उसका यह मनुष्य उपहास करता है, और वह स्नेहहीन, असमर्थ, अपने कुटुम्बियों का पालन नहीं करता है।

**परलोकः केन दृष्टः क्व वा मुक्तिर्भविष्यति॥**
**स्वजनः क्लिश्यते यत्र मूढस्यास्य कुटुम्बिनः॥ १८॥**

कुटुम्बयुक्त इस मूढ़ के स्वजन क्लेश पा रहे हैं ऐसे वाक्यों को कहता है, क्या परलोक किसी ने देखा है, और मुक्ति कहाँ होगी ?

**यदि कुटुम्बव्यासक्तो महामोहवशं गतः॥**
**नाशयत्यात्मनात्मानं नैवोद्धरति संसृतेः॥ १९॥**

इस प्रकार महामोह के वशीभूत होकर परिवार में आसक्त हुआ मनुष्य अपने आपसे ही अपने को नाश करता है, और संसार से उसका उद्धार नहीं होता हैं।

**अभिमानञ्च कुरुते को मदन्योऽस्ति भूतले॥**
**देशाद्देशान्तरं याति राज्ञां सेवां करोति च॥ २०॥**

मनुष्य यह अभिमान करता हैं कि, पृथ्वी पर मेरे समान और कोई नहीं है, और देश देशान्तर में जाकर राजाओं की सेवा करता है।

**पौरुषेण च युक्तस्य जनस्यैव महीतले॥**
**अबान्धवोऽपि बन्धुः स्यादन्यस्यात्र महाजनाः॥ २१॥**

इस जगती तल पर पौरुष युक्त मनुष्य के बड़े बड़े लोग जो अबन्धु हैं वे भी बंधु हो जाते हैं।

**गृहं कस्य सुताः कस्य मित्राणि स्वजना स्त्रियः॥**
**कश्चिन्न सुखदो लोके शरीरे दुःखसम्भवे॥ २२॥**

दुःख से उत्पन्न हुआ शरीर संसार के किसी पदार्थ को सुख नहीं दे सकता, अतः घर किसका है पुत्र, मित्र, स्वजन और स्त्रियां किसकी है? अर्थात् किसी की नहीं।

**यावद्देहो मनुष्यस्य समर्थः कार्य्यसाधने॥**
**तावत्समादरं याति विपरीतमतोऽन्यथा॥ २३॥**

मनुष्य की देह जितने दिनों तक कार्य के साधन करने में समर्थ है, वह उतने ही दिनों तक आदर पा सकती है परन्तु इसके विपरीत अर्थात् ! असमर्थ होने पर अपमान सहना है।

**तस्मात्तथा साधनीयमारोग्यं पौरुषं यतः ॥**

**एवं चिन्तयमानस्य कालो याति भृशं वृथा ॥ २४ ॥**

इस कारण जिससे पौरुष और आरोग्यता प्राप्त हो ऐसा उपाय करना चाहिए, इस प्रकार से चिन्ता करने वाला मनुष्य अपने अमूल्य समय को वृथा व्यतीत कर देता है।

**अहं ममेति मूढस्य स्वदेहेत्यभिमानिनः ॥**

**कामासक्तस्य नो सिद्धमैहिकं पारलौकिकम् ॥ २५ ॥**

यह 'मैं' और 'मेरा' है इसमें मोहित होकर यह मेरा शरीर है, और यह वस्तु मेरी है, इस प्रकार से अभिमान से युक्त कामार्थी मनुष्यों के दोनों लोक सिद्ध नहीं हो पाते हैं।

**विघ्नभूतास्तु पञ्चैव विद्यन्तेऽत्र शरीरिणः ॥**

**देवतान्तरसेवा स्त्रीसङ्गमो धनसञ्चयः ॥ २६ ॥**

देहधारी मनुष्यों के पाँच कार्य विघ्नकारक हैं एक तो विष्णु के अतिरिक्त और देवता की सेवा करना, स्त्रीसङ्गम और धन का इकट्ठा करना।

**स्वबान्धवेषु चासक्तिरभिमानश्च पञ्चमः ॥**

**एतैर्मोहितचित्तस्य न भक्तिः स्याज्जनार्दने ॥ २७ ॥**

अपने कुटुम्बियों में आसक्ति और अभिमान करना, इन पाँचों से ही मोहित चित्त होकर मनुष्य श्री भगवान् के प्रति भक्ति नहीं कर सकता है।

**इत्थं शनैस्त्यक्तसत्त्वो जनो यात्यधमां गतिम् ॥**

**मुनयः सन्ति लोकेऽस्मिंस्तपसा दग्धकिल्विषाः ॥ २८ ॥**

इस प्रकार धीरे-धीरे सत्त्व का त्याग करने वाला व्यक्ति अधम गति को प्राप्त होता है, इस लोक में बहुत से मुनि हैं उन्होंने तपरूप अग्नि से समस्त पापों को भस्म कर दिया है।

**शङ्किता घोरसंसारान्नितरां वनमाश्रिताः ॥**

**केचिद्धरिपदं प्राप्ताः परावृत्ता न भूतले ॥ २९ ॥**

घोर संसार की शङ्का से शङ्कित चित्त होकर, अरण्य में वास किया है, कोई-कोई तो विष्णु के पद को प्राप्त होकर फिर इस पृथ्वी में नहीं आते हैं।

**भक्तिभावविधानस्ते पार्षदाः सन्निधौ स्थिताः ॥**

**न त्यजन्ति क्षणमपि क्वापि पार्श्वं मधुद्विषः ॥ ३० ॥**

वे सब महात्मा विष्णु के पार्षद होकर उनके निकट भक्तिभाव से रहकर अत्यन्त सुख पाते हैं, वे क्षण भरके लिए भगवान् की सन्निधि से अलग होना नहीं चाहते हैं।

**तस्मान्न सा गतिर्नृणां भवेत्कपटकर्मिणाम् ॥ ३१ ॥**

इसलिए कपट कर्म करने वाले मनुष्यों को इस प्रकार की उत्तमगति नहीं मिलती है।

*ऋषय ऊचुः*

**नारदः पार्षदश्रेष्ठो विष्णोरेकान्तभक्तिमान् ॥**

**कृष्णं हित्वा तस्य लोकान्प्रति पर्य्यटनं कथम् ॥ ३२ ॥**

ऋषि बोले कि भक्तों में प्रथम गिनने योग्य विष्णु के पार्षदों के बीच में ये नारदजी ही श्रेष्ठ हैं। इन्हें श्री कृष्ण को छोड़कर लोक-लोक घूमने की क्या आवश्यकता थी ?

*सूत उवाच*

**संसारकूपपतितं विषयैर्मुषितेक्षणम् ॥**

**ग्रस्तं कालाहिना दृष्ट्वा जायतेऽस्य दया जनम् ॥ ३३ ॥**

सूत जी बोले कि, संसार रूपी कुण्ड में गिरे हुए, विषयवासना से अन्धे हुए काल सर्प से ग्रसे हुए मनुष्यों को देखकर, उनको दया उत्पन्न हुई अर्थात् वे उनके उपकार किये बिना शान्त न रह सके।

**मोहोऽयं पञ्चधा प्रोक्तो बन्धनाय नृणामिह ॥**

**मायागुणैः प्रतीकारं तस्य वक्ष्ये द्विजोत्तमाः ॥ ३४ ॥**

मनुष्यों को बाँधने के लिए पाँच प्रकार के मोह बतलाये गये हैं, हे ब्राह्मणों ! ऊपर कहे हुए माया गुणों से उनका प्रतीकार बतलाता हूँ।

**नहि कश्चिदुपायोऽत्र भगवन्तं हरिं बिना ॥**
**सर्वः सर्वैः सह चरत्यवस्थास्वनुवर्त्तते ॥ ३५ ॥**

भगवान् विष्णु के अतिरिक्त इसका और कोई उपाय नहीं है हमारा वही हरिरूप उपाय भक्तों का सहायक और अवस्था का अनुवर्ती है।

**स्वीयवृत्तेश्च संयोगं निमित्तीकृत्य भोगभाक् ॥**
**स जीवो वर्त्तते गर्भे यथा तत्कथयाम्यहम् ॥ ३६ ॥**

अपने कर्मों से यह जीव उसके संयोग को निमित्त बनाकर ही फल भोगता है, वही भोगनेवाला जीव जन्म पाने के लिए इस प्रकार से गर्भ में वास करता है उसे मैं यथावत् कहता हूँ।

**यदैव जायते सङ्गः शुक्रशोणितयोरिह ॥**
**गर्भभ्रूणस्त्वनुदिनं तदारभ्य प्रवर्द्धते ॥ ३७ ॥**

जब पुरुष और स्त्री के संसर्ग से वीर्य और रक्त, आपस में मिल जाते हैं उसी समय से अनुदिन गर्भ बढ़ने लगता है।

**द्रवरूपं तदेकाह्ना कललं जायते त्र्यहात् ॥**
**वृद्धिस्तु सप्तरात्रेण पक्षेण कठिनं भवेत् ॥ ३८ ॥**

एक दिन में तो वह वीर्य रक्त से मिला हुआ द्रव रूप रहता है, तीसरे दिन कुछ गाढ़ा और सात रात्रियों में वह गाढ़ा होकर कुछ-कुछ बढ़ने लगता है, और एक पक्ष में वह कुछ कठोर हो जाता है।

**शिरो मासद्वयेन स्यात्पाणिपादं त्रिमासकैः ॥**
**कट्युदराङ्गुलीरूपं तुर्ये मास्यभिजायते ॥ ३९ ॥**

इस प्रकार से दूसरे महीने में मस्तक, तीसरे में हाथ और पैर, चौथे में कमर और उदर उंगली और रूप होते हैं।

**जायन्ते मासिरक्तादिधातवः सप्त पञ्चमे ॥**
**षष्ठे तु पृष्ठवंशादिकीकसं कर्णनासिके ॥ ४० ॥**

पाँचवें में रक्त, रस, माँस, मेद, अस्थि, मज्जा और शुक्र ये सात धातुयें बनती हैं, और छठे महीने में पीठ का भाग और प्रधान हड्डियाँ कर्ण और नासिका बनती है।

**मुखं नेत्रञ्च भवति नखरोमादि सप्तमे ॥**
**सूक्ष्मभावोऽस्थीनि यच्च युगपज्जायतेऽखिलम् ॥ ४१ ॥**

और सातवें महीने में मुख, नेत्र, नख और रोम इत्यादि उत्पन्न होते हैं। अस्थियाँ और सूक्ष्म भाव सब कुछ उस समय एक साथ परिपूर्ण हो जातें है।

**ओजोऽष्टमे सञ्चरति गर्भे मातरि चासकृत् ॥**
**तेन मातुर्भवेद्ग्लानिर्जातश्चैव न जीवति ॥ ४२ ॥**

आठवें महीने में माता के गर्भ में एक प्रकार का तेज सञ्चरण करता है।परन्तु उससे यदि माता को कुछ भी ग्लानि हो तो उस कुक्षि में निवास करने वाला जीव जीवित नहीं रह सकता।

**स देही नवमे मासि सर्व्वलक्षणसंयुतः ॥**
**जानञ्छुभाशुभं कर्म्म संस्मरेत्पूर्व्वजन्मजम् ॥ ४३ ॥**

वह देहवान् जीव नवें महीने में सब लक्षणों से युक्त होकर अपने पूर्वजन्म के किये हुए शुभाशुभ कर्मों का स्मरण करता है।

**मातरो विविधा दृष्टा पितरो भ्रातरस्तथा ॥**
**नानायोनिमहं प्राप्तो मनुष्यपशुपक्षिणाम् ॥ ४४ ॥**

मैंने बहुत से माता पिता और भ्राताओं को देखा है, मनुष्य और पशु-पक्षी आदि की बहुत सी योनियाँ मिली है।

**तत्रोषितोऽतिदुःखेन गर्भे मूत्रमलावृतः ॥**
**उल्वेन वेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः ॥ ४५ ॥**

उन सब योनियों में गर्भ के मध्य मलमूत्र से ढका हुआ मैं अत्यन्त ही कष्ट के साथ वास कर रहा हूँ, पीठ, ग्रीवा और समस्त हड्डियों को सिकोड़कर जरायु के चर्म के अन्तर्गत।

**गर्भाशये स्थितो देही ज्ञातवांश्चिन्तयेदिदम् ॥**
**किं कृतं दुष्कृतं कर्म्म यतो गर्भे निवेशितः ॥ ४६ ॥**

गर्भ में बैठा हुआ यह प्राणी अपने दिव्य ज्ञान को प्राप्त करके इस प्रकार की चिन्ता करता है, मैंने अन्य जन्म में ऐसा कौन सा पाप किया था कि जिससे मुझे इस गर्भ में वास मिला है।

**पतितो निरये घोरे दुःसहे गर्भसञ्ज्ञिते ॥**
**यदितो निर्गमिष्यामि भजिष्यामि हरिं प्रभुम् ॥ ४७ ॥**

मैं गर्भनामक घोर कठिन नरक में पड़ा हुआ हूँ, इस नरक से मैं यदि बाहर हो जाऊँ तो अवश्य ही श्री हरि का भजन करूँगा।

**येन भूयो गर्भवासदुःखं द्रक्ष्यामि न क्वचित् ॥**
**ततः स दशमे मासि नवमे चानिलैर्बलात् ॥ ४८ ॥**

ऐसा करने से फिर मैं कभी भी गर्भवास की पीड़ा को नहीं देखूँगा। परन्तु इसके पीछे वह नवें या दसवें महीने में वायु की प्रबलता से।

**निःसारितोऽतिदुःखार्त्तो योनिमार्गेण सङ्कटात् ॥**
**निर्गतो योनितो देही मायया श्लिष्यते पुनः ॥ ४९ ॥**

दुःखी होकर योनि मार्ग के घोर सङ्कट से बाहर होता है, तब यह जीव माया के द्वारा आलिङ्गित हो जाता है।

**पितृभ्यां जडवद्बालः पोष्यमाणोऽतिमूढधीः ॥**
**अहो पोषणचातुर्यं हरेरद्भुतकर्म्मणः ॥ ५० ॥**

यह निर्बुद्धि बालक पिता माता से जड़ के समान पालित होता है परन्तु अहो! अद्भुतकर्म करने वाले श्री भगवान् का प्रजापालन का कैसा चातुर्य है।

**गर्भे नानाह्यान्त्रनाडीप्राप्तेनैव रसेन भृत् ॥**
**मातुर्जग्धान्नपानोत्थैर्वाल्येस्तन्यैश्च पोषणम् ॥ ५१ ॥**

पहले तो गर्भ में आन्त्र नाडी के द्वारा प्राप्त रस से इसका पालन होता है, इसके बाद माता के खाये हुये अन्न से जो स्तनों में दूध उत्पन्न होता है, बाल्य काल में उससे यह पाला जाता है।

**शक्तिर्न चालनेऽङ्गानां पार्श्वस्य परिवर्तने ॥**
**दष्टः शय्यास्थितैः कीटैर्मलाक्तः शयितः सुखम् ॥ ५२ ॥**

और बाल्यकाल में उसको अङ्ग चलाने की शक्ति न होने से करवट बदलने में भी असमर्थ वह यह शय्या पर सुख से लेटा रहता है, उसे वहाँ खटमल इत्यादि कीड़े काटते हैं, विष्ठा मूत्र से इसका शरीर लथपथ रहता है।

**मूकस्तु कर्मणा शक्तः पङ्गुर्यानि गृहे कुणिः ॥**
**काले कतिपयातीते भाषते परिगच्छति ॥ ५३ ॥**

बोलने की इसमें शक्ति नहीं होती, सुनने तथा चलने की शक्ति से रहित घर में कुणि के समान वह रहता है। इसी प्रकार कुछ काल बीत जाने पर वह बालक बोलता है और कुछ-कुछ चल भी सकता है।

**दिवानिशं समीपेऽस्य वर्त्तते हितकृद्धरिः॥**
**इन्द्रियाणां परावृत्या नैव जानाति मूढधीः॥ ५४॥**

इस समय रात दिन उस अज्ञानी बालक की रक्षा के लिए श्री हरि भगवान् उनके समीप वर्तमान रहते हैं, परन्तु इन्द्रियों में प्रयोजनीय शक्ति के अभाव होने से वह निर्बुद्धि उनको नहीं जान पाता है।

**तं विना पोषकः कोऽन्यो धाता पालयिता प्रभुः॥**
**आदौ मध्ये तथान्ते च हरिः सर्वत्र संस्थितः॥ ५५॥**

उनके अतिरिक्त और कौन मनुष्य पालन करने वाला है, वह सर्वशक्तिमान्, धाता और पालने वाले प्रभु हैं। आदि, मध्य और अन्त इन तीनों कालों में श्री हरि सर्वत्र रहते हैं।

**न तं बिना क्वचित्स्नेहो देहगेहसुतादिषु॥**
**न तिष्ठति क्षणमपि दग्धतन्तुर्यथा पटः॥ ५६॥**

जिस प्रकार से तन्तुओं के दग्ध हो जाने पर उसको कोई पट नहीं कहता है, उसी प्रकार भगवान् के अतिरिक्त शरीर, पुत्र, घर में कुछ भी स्नेह नहीं होता है। वह क्षण भर स्थिर भी नहीं रह सकता है।

**तस्मिन्विनिःसृते देहात्तत्र सर्वेन्द्रियाणि च॥**
**स्ववृत्तिषु निवर्त्तन्ते मृत इत्युच्यते नृभिः॥ ५७॥**

वह अर्थात् हरि के देह से निःसृत हो जाने पर इन्द्रियाँ भी अपने-अपने विषयों से निवृत्त हो जाती है।तब मनुष्य उस शरीर को मृत कहते हैं।

**यदि तेन भवेत्स्नेहो हरिणा न गृहादिषु॥**
**कथं मोहः पुनः कार्य्यो मोहाब्धिनरकं ब्रजेत्॥ ५८॥**

यदि श्री भगवान् के द्वारा घर में स्नेह न हो तब जीव को मोह नहीं करना चाहिए अन्यथा मोह रूपी समुद्र के नरक में जाता है।

**तस्मान्नित्यं स भगवान्सेव्यः सत्पुरुषैरिह॥**
**कामिन्या व्यभिचारिण्या यथाकालप्रबुद्धया॥ ५९॥**

अतः उत्तम पुरुषों को चाहिए कि वे सर्वदा भगवान् की इस लोक में सेवा करें। व्यभिचारिणी स्त्री यथासमय में प्रबुद्ध होकर

**यथा प्रपद्यते जारस्तुष्यते स च सर्वथा ॥**
**यथा कल्पतरुः साक्षादाश्रितेभ्योऽर्थदो भवेत् ॥ ६० ॥**

जैसे जार के पास जाकर सर्वदा उसको संतुष्ट करती है, क़ल्पवृक्ष जिस प्रकार से अपने आश्रितों को अर्थ दाता होता है।

**कोटिभिर्वन्धुभिर्नैव कर्तुं शक्यं हितैषिभिः ॥**
**हृदयस्थेन हरिणा क्रियते यज्जनस्य हि ॥ ६१ ॥**

और करोड़ों बन्धु जिस हित को करने में असमर्थ है, उसे भगवान् श्री हरि मनुष्यों के हृदय में विराजमान होकर परिपूर्ण से कर देते हैं।

**अत्युन्नतं नमयति नमितं परिवर्द्धयेत् ॥**
**क्षणाद्वर्द्धयते हीनं करोत्येकं क्षणेन हि ॥ ६२ ॥**

वह अत्यन्त ऊँचे को नीचा कर देते हैं और नीचे को ऊँचा कर देते हैं, क्षणकाल में ही हीन मनुष्य को बढ़ा देते हैं और बढ़े हुए को क्षण भर में ही हीन के समान कर देते हैं।

**चिन्तितं पुरुषैः कार्य्यं यत्नैश्च परिरक्षितम् ॥**
**नानापापैर्विरचितं नश्यते न विनाशितम् ॥ ६३ ॥**

मनुष्य को यत्नपूर्वक परिरक्षित चिन्तित कार्य को करना चाहिए। अनेक पापों से रचित अविनाशी वस्तु भी नष्ट हो जाती है।

**तृणीकरोत्यसौ मेरुं तृणमेकं करोति यः ॥**
**अच्छेद्यं छेदयत्याशु अभेद्यं भेदयत्यपि ॥ ६४ ॥**

विष्णु भगवान् सुमेरू पर्वत को तिनके के समान और तिनके को मेरु तुल्य तथा अच्छेद्य को छेद्य और अभेद्य को भेद्य कर सकते हैं।

**ब्रह्माण्डकोटिस्त्रष्टा स कटाक्षक्षणमात्रतः ॥**
**संहर्त्ता पालकश्चैकस्ततः कोऽन्यो भवेद्विभुः ॥ ६५ ॥**

एक दृष्टि में ही वह करोड़ों ब्रह्माण्डों की सृष्टि करने में समर्थ हैं, वही एक पालन करने वाले और संहार करने वाले हैं उनके अतिरिक्त और कोई विभु अर्थात् व्यापक नहीं है।

**ये संस्थिता आत्मनि योगवन्तस्तद्भक्तिभावेन सुखं निविष्टाः ॥**
**स्वर्गादिसौख्यं परिहृत्य दूरादानन्दसन्दोहमवाप्नुवन्ति ॥ ६६ ॥**

जो अपनी आत्मा में योग के आश्रय से उन विष्णु भगवान् की भक्ति में रत होकर सुख पूर्वक रहते हैं वे स्वर्गादि के सुख को दूर से ही छोड़कर आनन्द के सन्दोह को प्राप्त करते हैं।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके सूतशौनकसंवादो नाम सप्तमोऽध्यायः ॥ ७ ॥*

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में सप्तम अध्याय समाप्त ॥ ७ ॥*

# अष्टमोऽध्यायः

*सूत उवाच*

**ये भक्तियुक्ता गोविन्दे तेषां वक्ष्यामि लक्षणम् ॥**
**आत्मनः श्रेय इच्छद्भिः श्रोतव्यं मनसास्तिकैः ॥ १ ॥**

सूत जी बोले कि, जो गोविन्द के भक्त हैं उनके लक्षण कहता हूँ। अपना कल्याण चाहने वाले आस्तिकों को मन से इसे सुनना चाहिए।

**न हि वाञ्छन्ति ते स्वर्गमणिमादिकमष्टकम् ॥**
**ब्रह्मलोकं धरेशत्वं सर्वं कालपरिप्लुतम् ॥ २ ॥**

वे स्वर्ग और अणिमादि आठों सिद्धियों की इच्छा नहीं करते क्योंकि ब्रह्मलोक तथा राजत्व सब कुछ कालानुसार विनश्वर हैं।

**तथा मुक्तिं न वाञ्छन्ति ये भक्तास्ते हरिप्रियाः ॥**
**न तथा तत्प्रिया लक्ष्मीर्वक्षस्थापि निरन्तरम् ॥ ३ ॥**

वे हरि के प्रिय भक्त मुक्ति की इच्छा नहीं करते। वे भगवान् के इतने प्रिय है कि उनके वक्षः स्थल पर निरन्तर विराजमान लक्ष्मी भी उतनी प्रिय नहीं है।

**महादेवो नाप्यनन्तो यथा भक्तो हरेः प्रियः ॥**
**लोकेऽस्मिन्स्वामिनः सन्ति सेवकैः परिरक्षिताः ॥**
**न तथायं हरिः स्वामी सन्ति भृत्यान्स्वयं यतः ॥ ४ ॥**

विष्णु भगवान् को महादेव जी तथा शेष जी भी इतने प्रिय नहीं हैं कि जितने भक्त प्रिय हैं, इस संसार में यह रीति है कि सेवक अपने स्वामी की रक्षा करते हैं परन्तु यह श्री भगवान् वैसे स्वामी नहीं हैं कारण कि वह स्वामी होकर भी सेवकों की स्वयं रक्षा करते हैं।

*ऋषयः ऊचु*

**के भक्ताः का क्रिया तेषां लक्षणञ्च तथा मुने ॥**
**कथं हि भजनं विष्णोर्यतः प्रीतो भवेद्धरिः ॥ ५ ॥**

ऋषि बोले कि हे मुने। कौन उनके भक्त हैं और उनकी क्रिया के लक्षण क्या है, विष्णु के भजन की रीति किस प्रकार है जिससे श्री भगवान् प्रसन्न होते हैं।

*सूत उवाच*

**अनन्यशरणाः शान्ताः साधवः साधुभूषणाः ॥**
**यशो मुरारेः श्रृण्वन्ति कथययन्ति स्मरन्ति च ॥ ६ ॥**

सूत जी बोले कि जो मनुष्य भगवान् हरि के अतिरिक्त दूसरों की सेवा नहीं करते हैं और अनन्य भक्ति भाव से समान गुणों से युक्त साधु और साधुओं के हृदय के भूषण होकर मुरारि के यश को श्रवण, कीर्तन तथा स्मरण करते हैं।

**ये कलत्रगृहप्राणान्पुत्रवित्तेष्टमङ्गलम् ॥**
**त्यंक्त्वा तच्छरणं प्राप्ताः स कथं तान् समुत्सृजेत् ॥ ७ ॥**

जो मनुष्य स्त्री, गृह प्राण, पुत्र, वित्त और इष्टमङ्गल को त्याग कर श्री भगवान् का ही केवल आश्रय करते हैं इस कारण भगवान् किस प्रकार से उनको छोड़ सकते हैं।

**अहर्निशं प्रियो येषां हरिरात्मा सतां गतिः ॥**
**तं विनान्यं न जानन्ति भक्तास्ते च हरेः प्रियाः ॥ ८ ॥**

साधुओं की गति आत्मरूपी हरि जिन्हें अहर्निश प्रिय हैं केवल हरि के अतिरिक्त वे अन्य किसी को जानते नहीं हैं वे ही भगवान् के प्रिय भक्त हैं।

**यादृशी च क्रिया येषां तां श्रृणुध्वं द्विजोत्तमाः ॥**
**हर्य्यर्थं गृहकार्याणि देहागारसुतादयः ॥ ९ ॥**

हे श्रेष्ठ ब्राह्मणों! उन भक्तों की क्रिया को सुनो। देह, गृह, पुत्रादि और गृह कार्यों को वे भगवान् के लिए करते हैं।

**मिथो हि नितरां कृष्णश्रवणं कीर्त्तनं प्रियाः ॥**
**वाचा गायन्ति तल्लीलां कर्णे श्रृण्वन्ति तद्यशः ॥ १० ॥**

वे प्रियभक्त परस्पर कृष्ण नाम का कीर्तन और श्रवण करते हैं, वे वचनों से उनकी लीला का गान, तथा दोनों कानों से उनके यश को सुनते हैं।

**पद्भिर्गच्छन्ति क्षेत्राणि करैर्मन्दिरमार्जनम् ॥**
**पश्यन्ति रूपं चक्षुर्भ्यां गन्धं जिघ्रन्ति नासया ॥ ११ ॥**

पैरों से हरि के क्षेत्रों में जाते हैं, हाथ से भगवान् के मंदिर का मार्जन और दोनों नेत्रों से भगवान् के स्वरूप का दर्शन, तथा नासिका से भगवत-सुगन्धि का ग्रहण करते हैं।

**हरेर्निर्म्माल्यपुष्पस्यालिङ्गनं ये च कुर्वते ॥**
**भक्त्या पादोदकं पीत्वा यान्ति सन्तर्पणं हृदि ॥ १२ ॥**

हरि के निर्माल्य फूलों का आलिङ्गन करते हैं, जो भक्ति के साथ विष्णु के चरणामृत को पान करते हैं उन्हें हृदय में संतोष प्राप्त होता है।

**मानसे चरणं विष्णोर्नैवेद्यमुदरे तथा ॥**
**निर्माल्यचन्दनं भाले मस्तके तुलसीदलम् ॥ १३ ॥**

मन में विष्णु के चरण, उदर में नैवेद्य, भाल पर विष्णु का निर्माल्य चन्दन और मस्तक पर तुलसी दल।

**धारयन्ति प्रतिदिनं श्रीकृष्णैकाग्रचेतसः ॥**
**एवं क्रिया हि भक्तानां लक्षणानि वदाम्यहम् ॥ १४ ॥**

श्रीकृष्ण में एकाग्रचित्त होकर उपयुक्त पदार्थों को प्रतिदिन धारण करते हैं इसी प्रकार भक्तों की क्रिया है जिनके लक्षण मैं कह रहा हूँ।

**लोकश्रुतिविभक्तानि सर्वशास्त्रोचितानि च ॥**
**आचरणानि चिह्नानि वैजयन्तीव वैष्णवी ॥ १५ ॥**

लोक श्रुति में विभक्त तथा शास्त्रोचित भक्तों के आचरण चिह्न विष्णु के वैजयन्ती ध्वजा चिह्न के समान है।

**दृश्यन्ते येषु भक्तेषु त एव हि प्रिया हरेः ॥**
**क्षिप्तावमानिता ध्वस्तास्ताडिताः पीडिता अपि ॥ १६ ॥**

ये गुण जिनमें दिखायी देते हैं। वे ही श्री भगवान् के प्यारे भक्त हैं, जो क्षिप्त और निरादर को प्राप्त ताडित और पीड़ित होकर भी विकृत नहीं होते हैं।

**न विक्रिया प्रभवति प्रतीकारं न कुर्वते ॥**
**हितं कुर्वन्ति सर्वेषां करुणा दीनवत्सलाः ॥ १७ ॥**

जो दूसरों से बदला लेने इच्छा नहीं करते, विकृत नहीं होते, जो सबका हित करते हैं, दीनवत्सल तथा करुणामय हैं।

**तितिक्षवोऽल्पवाचो हि महान्तो लोकपावनाः।**
**ते प्रियाः श्रीहरेर्भक्ताः प्रेममाध्वीकमक्षिकाः ॥ १८ ॥**

जो तितिक्षु, अल्प बोलने वाले, महत् प्रकृति, संसार को पवित्र करने वाले हैं, प्रेम की मधु मक्खी के समान वे ही हरि के प्रिय भक्त हैं।

**भजनं विमलं विष्णोर्भक्तिभावेन चासकृत् ॥**
**पुंसां न पुरुषार्थोऽन्यो भजनादिति चिन्तयेत् ॥ १९ ॥**

भक्तिभाव से सर्वदा विष्णु का भजन निर्मल अर्थात् पाप रहित हैं, भजन के बिना मनुष्य का कोई पुरुषार्थ नहीं है, ऐसा विचार करे।

**न योगो न च साङ्ख्यञ्च न दानं न तपः फलम् ॥**
**नेष्टापूर्त्तादिकं कर्म परलोकेऽतिसौख्यदम् ॥ २० ॥**

योग, साङ्ख्य, दान, तपस्या का फल इष्टापूर्त इत्यादि कर्म भी परलोक में विशेष सुख के देने वाले नहीं है।

**लभेद्योगेन साङ्ख्येन ज्ञानं ब्रह्मैकदर्शनम् ॥**
**तपसा क्रियया दानैरिष्टापूर्त्तैश्च कर्मभिः ॥ २१ ॥**

साङ्ख्य योग से केवल ज्ञान और एकमात्र ब्रह्म का दर्शन प्राप्त हो सकता है, तपस्या और धर्म के कार्य, दान और इष्टापूर्त्त कर्म द्वारा।

**इहामुत्र फलं लब्ध्वा सुखं भुक्त्वा पुनः पतेत् ॥**
**तस्मादनित्यमखिलं दूरतः परिवर्जयेत् ॥ २२ ॥**

इस लोक में फल को प्राप्त करके फिर सुख भोगने के बाद पुनः पतित होना पड़ता है, इस कारण अनित्य सभी वस्तुओं का त्याग करना चाहिए।

**सुखस्य कारणं विष्णोर्भजनं नापरं शुचि ॥**
**अयमेव परो धर्मस्तथा सर्वोत्तमो विधिः ॥ २३ ॥**

विष्णु भगवान् का भजन ही वास्तव में सनातन के सुख का कारण है इसके समान पवित्र और कुछ नहीं है यही परम धर्म है तथा यही सर्वोत्तम विधि है।

**जन्म तच्छोभनं जन्तोर्जीवितञ्च सुजीवितम् ।।**
**मनोवाक्कायकर्मभिः सेव्यते हरिरीश्वरः ।। २४ ।।**

जो लोग मन वचन कर्म से श्री भगवान् की सेवा करते हैं वे ही अपने जीवन से सुशोभित होते हैं और उनका जीवन ही सुजीवन है।

**सा वाणी या गुणान्ब्रूते करौ कर्मकरौ हरेः ।।**
**मनश्च तं स्मरेन्नित्यं चक्षुस्तद्दर्शनोत्सुकम् ।। २५ ।।**

उसी वाणी को वाणी कहा जाता है जो श्री भगवान् के गुणों की व्याख्या करती हैं और जिनके हाथ उनके कर्म करते हैं उन्हीं का जन्म सार्थक है, मन उन्हीं का स्मरण नित्य करें और नेत्र उन्हीं के दर्शनोत्सुक रहें तभी इनकी सार्थकता है।

**कर्णौ च तत्कथासक्तौ घ्राणं निर्माल्यगन्धहृत् ।।**
**गात्रञ्च पावितं विष्णोः पादोदकनिषेवणैः ।। २६ ।।**

दोनों कान उनकी कथा सुनने में आसक्त तथा घ्राणेन्द्रिय विष्णु के निर्माल्य की गन्ध ग्रहण करने वाली तथा चरणों के जल के सेवन से गात्र पवित्र होता है।

**धात्रा यत्नाद्दिव्यं नमितुं यच्छिरो हि विहितं मनुजानाम् ।।**
**देवकीतनयपादसरोजे न नेमे सदापि भारमिवात्र ।। २७ ।।**

विधाता ने बड़े यत्न से मनुष्य के मस्तक को नमस्कार करने के लिए बनाया है, यदि वह मस्तक देवकीनन्दन भगवान् के चरण कमलों में न नत हुए तो उसका शिर मानों भार स्वरूप ही है।

**या वदेन्न हरिनामगुणं सा प्रोच्यते विपुलदर्दुरजिह्वा ।।**
**तच्छ्रुतेर्हि विमुखावपि कर्णौ भित्तिरन्ध्रमिव कुण्डलकान्तौ ।। २८ ।।**

जो जिह्वा भगवान् के गुणों की व्याख्या नहीं करती उनकी जिह्वा मेंढक की जिह्वा के समान है, कृष्ण की कथा को सुने बिना दोनों कान चाहे कुण्डल इत्यादि से भूषित हो परन्तु वह घर की दीवारों में छिद्र के समान है।

**केकिपिच्छसदृशे नयने ते ये हरेरखिलसौष्ठवरूपम् ।।**
**पश्यतो न न च गन्धविहीनं राजते नु कमलं विफलं हि ।। २९ ।।**

जिन विशाल नेत्रों ने हरि के सौम्य स्वरूप का दर्शन नहीं किया, वह नेत्र मोर के पंख के समान हैं, अर्थात् सुगन्धहीन कमल जिस प्रकार सुशोभित नहीं होता, निष्फल है, ये नेत्र भी उसी प्रकार निष्फल है।

**भूरुहावयवनिर्मितपादौ यौ न गच्छत इमौ हरिसद्म॥**
**तादृशौ कनकभूषितहस्तौ यौ हरेर्न कुरुतः परिचर्य्याम्॥ ३०॥**

यदि दोनों पैर भगवान् के मन्दिर को गमन नहीं करते तो वे वृक्षावयव निर्मित ही है, जो हाथ हरि की सेवा नहीं करते है वे स्वर्ण भूषित होने पर भी सुशोभित नहीं होते हैं।

**इत्थं विष्णावर्पितानीन्द्रियाणि यैस्तैर्भक्तैर्जन्म लब्धं पृथिव्याम्॥**
**येऽन्ये दुष्टा विषयासक्तचित्ता मनुष्याणां निष्फलं जन्म तेषाम्॥ ३१॥**

जो भक्त पृथ्वी पर जन्म लेकर इस प्रकार से अपनी-अपनी इन्द्रियों को विष्णु भगवान् को अर्पण करते हैं वे ही यथार्थ भक्त हैं, और जो दूसरे लोग दुष्टबुद्धि विषय भोग में आसक्त है उन मनुष्यों का जन्म निष्फल है।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके सूतशौनकसंवादो नामाष्टमोऽध्यायः॥ ८॥*

*सकलपुराणसारभूत आद्युपपुराण में अष्टम अध्याय समाप्त॥ ८॥*

# नवमोऽध्यायः

*मुनय ऊचुः*

**क्वास्ते कृष्णः सदा तस्य क्रीडा कुत्र पुरीश्वरी ॥**
**प्रेष्ठः क्वःपर्वतश्रेष्ठः कः का च सरिदुत्तमा ॥ १ ॥**

मुनि बोले कि श्री कृष्ण भगवान् कहाँ निवास करते हैं, और उनकी क्रीड़ा का प्रधान स्थल और पुरी कौन सी है? और कौन सा पर्वत श्रेष्ठ है? नदियों में उत्तम नदी कौन सी है।

**को ग्रामः किं वनं विद्वंस्त्वं तन्नो ब्रूहि तत्त्वतः ॥**
**एवं पृष्टो मुनिश्रेष्ठः प्रतिपूज्य वचोऽब्रवीत् ॥ २ ॥**

कौन सा ग्राम और कौन सा वन उनको प्यारा है और वह कहाँ पर स्थित हैं? हे विद्वन् ! उसे आप मुझसे यथा विधि बतलाओ, इस प्रकार पूछे जाने पर मुनियों में श्रेष्ठ सूत जी उनकी पूजा करके कहने लगे।

*सूत उवाच*

**माथुरं मण्डलं विप्र योजनानाञ्च विंशतिः ॥**
**चक्रं सुदर्शनं नाम तस्योपरि विराजते ॥ ३ ॥**

सूत जी बोले कि हे ब्राह्मणों! बीस योजन के विस्तार वाली मथुरा पुरी है उसके ऊपर सुदर्शन नाम का चक्र विराजमान है।

**आस्ते यत्र हरिः साक्षान्नित्यं सन्निहितः स्वयम् ॥**
**न मुञ्चति कदाचिद्वै स्थानं स्वीयं सदा प्रियम् ॥ ४ ॥**

वहाँ साक्षात् श्री भगवान् स्वयं विराजमान रहते हैं, वह उस अपने प्यारे स्थान को कभी नहीं छोड़ते।

**तत्स्थानसदृशं स्थानं त्रिदिवेऽपि च दुर्लभम् ॥**
**सर्वलोकादृतं शुद्धं बैकुण्ठेन समं हितम् ॥ ५ ॥**

उस स्थान के समान स्थान देवताओं को भी दुर्लभ है, सब लोकों से आदर पाया हुआ पवित्र और वैकुण्ठ के समान उत्तम है।

**न भूमिः कल्पिता श्रेष्ठा न कालकलितो जनः ॥**

**योगिनां याज्ञिकानाञ्च तत्स्थानमतिदुर्लभम् ॥ ६ ॥**

इसके समान श्रेष्ठभूमि और कहीं भी कल्पित नहीं हुई, और वहाँ के लोग कालकलित नहीं हैं वह स्थान योगी और याज्ञिकों को भी दुर्लभ है।

**तत्र रम्या मधुपुरी प्रिया भगवतो हरेः ॥**

**सरिद्वरायाः कालिन्द्यास्तटे वासमुपेयुषी । ७ ॥**

वहाँ नदियों में श्रेष्ठ कालिन्दी के तट पर बसने वाली भगवान् कृष्ण की प्रिय तथा सुन्दर मथुरा नगरी है।

**हेमभूर्भूधरश्रेष्ठो गोवर्द्धन इति श्रुतः ॥**

**यस्मिन्देशेऽस्ति परमः पुण्यवद्भिर्निषेवितः ॥ ८ ॥**

उस कनक भूमि के ऊपर गोवर्धन नाम का श्रेष्ठ पर्वत विराजमान है, जो पुण्यात्मा मनुष्यों के द्वारा सेवित है ॥

**यं दधारैकहस्तेन कृष्णो वामेन लीलया ॥**

**गोपगोपीगवाविष्टा स्नानार्थं च मिषेविता ॥ ९ ॥**

श्रीकृष्ण ने केवल लीला से ही अपने बाँये हाथ की कनिष्ठिका अँगुली पर उस पर्वत को धारण किया था, स्नान के लिए सेवित गोप, गोपी तथा गायों से वह पुरी आविष्ट है।

**कालिन्दी हि नदीश्रेष्ठा रवेः पुत्री हरेः प्रिया ॥**

**वृन्दावनं नाम वनं यस्यास्ति सुखसद्मवत् ॥ १० ॥**

सूर्य की पुत्री नदियों में श्रेष्ठ यमुना जी श्री भगवान् को अत्यन्त प्यारी है। हरि के सुख सदन के समान वृन्दावन नाम का वन है।

**सर्वं सेवितकृष्णं स्यात्क्रीडा यत्र सदाहरेः ॥**

**गोपानां वसतिस्तत्र नन्दग्राम उदाहृतः ॥ ११ ॥**

यहाँ के सभी पदार्थ श्री कृष्ण की सेवा के निमित्त है और उस स्थान में हरि सर्वदा क्रीड़ा किया करते है, इसके पीछे नन्दग्राम है, वहाँ गोपों का निवास स्थान है।

**सिद्धा अष्टौ निषेवन्ते प्रभुं तद्ग्रामवासिनः ॥**

**न कामयन्ते ते मुक्तिं कृष्णानुग्रहशालिनः ॥ १२ ॥**

उस ग्राम के रहने वाले अष्टसिद्ध पुरुष भगवान् की सेवा करते हैं, श्री कृष्ण की कृपा से वे महात्मा मुक्ति की भी इच्छा नहीं करते।

**भजतान्तु विभूनां च वैकुण्ठे मुक्तिरुत्तमा ॥**
**यां दत्त्वा भगवान्कृष्णो भक्तेभ्यो ह्यनृणो भवेत् ॥ १३ ॥**

भगवान् विभू के भजन परायण मनुष्यों को उत्तम वैकुण्ठ और मुक्ति अर्थात् सालोक्य की प्राप्ति होती है भगवान् श्री कृष्ण भक्तों को इस प्रकार से मुक्ति देकर उनके ऋणं से मुक्त होते हैं।

**योगिभ्यो योगसंसिद्धिं दत्त्वा कामांश्च कामिनाम् ॥**
**मुनिभ्यः परमां मुक्तिं हरिर्दत्त्वाऽनृणो भवेत् ॥ १४ ॥**

इस प्रकार योगियों को योग सिद्धि, कामियों को काम और मुनियों को परम मुक्ति देकर भगवान् हरि अनृण हो जाते हैं।

**एते हि वञ्चिताः सर्वे लब्धं चैषामभीप्सितम् ॥**
**निष्कामेभ्यो निजं रूपं ध्यानगम्यं चतुर्भुजम् ॥ १५ ॥**

यह लोग सभी अपने-अपने अभीष्ट को प्राप्त कर वञ्चित हो जाते हैं वह निष्कामियों को अपना चतुर्भुज ध्यानगम्य स्वरूप अर्पित करते हैं।

**न दानैर्न तपोभिश्च तथा योगादिसाधनैः ॥**
**न दृश्यं भक्तिभावैस्तु दृश्यं वृन्दावनं वनम् ॥ १६ ॥**

दान, तप और योगादिक साधन करने से उस वृन्दावन का दर्शन होना दुर्लभ है, परन्तु भक्तिभाव से ही इस परम लीला युक्त वृन्दावन का दर्शन हो सकता है।

**वनानि द्वादश बुधैः कथितानीह भूतले ॥**
**नामानि तेषां शृणुत वदाम्युद्देशतः स्फुटम् ॥ १७ ॥**

इस पृथ्वी पर पंडितों ने बारह बनों का वर्णन किया है, उनके नाम उद्देश्य के अनुसार कह रहा हूँ आप लोग सुनें।

**आद्यं मधुवनं तत्र द्वितीयं तालसञ्ज्ञकम् ॥**
**तृतीयं कुमुदं नाम बहुलाख्यं चतुर्थकम् ॥ १८ ॥**

पहला मधुवन, दूसरा ताल अथवा ताड़वन, तीसरा कुमुद और चौथा बहुलाख्य वन है।

**खादिरं पञ्चमं चैव षष्ठं बिल्वकसञ्ज्ञितम् ।।**

**सप्तमं लोहसञ्ज्ञन्तु भाण्डीरं चाष्टमं स्मृतम् ।।१९ ।।**

पाँचवा खादिर वन, छठा बिल्वक नामक वन, सातवां लोहसञ्ज्ञक वन, और आठवां भाण्डीर वन कहा गया है।

**नवमं भद्रकं नाम कामिकं दशमं वनम् ।।**

**एकादशं छत्रवनं वृन्दावनमथादिमम् ।।२० ।।**

नवां भद्रक वन दशवां काम्यकवन वन, ग्यारहवां छत्र वन और बारहवां वृन्दावन है।

**तत्र वै द्वादशादित्यास्तेषु विष्णुः परो मतः ।।**

**तथा वनेषु सर्वेषु परं वृन्दावनं वनम् ।। २१ ।।**

वहाँ बारह सूर्य विराजमान है, उनके बीच में परम विष्णु विराजित है, सम्पूर्ण वनों में वृन्दावन ही प्रधान वन है।

***ऋषय ऊचुः***

**कुतो वृन्दावनं चेदं श्रेष्ठं माधुरमण्डले ।।**

**हरेरतिप्रियं कस्मात्कथं क्रीडति नित्यशः ।। २२ ।।**

ऋषियों ने पूछा कि मधुरापुरी के बीच में यह वृन्दावन कहाँ पर है और वह श्री कृष्ण को इतना प्यारा क्यो है और किसलिए वे वहाँ सर्वदा क्रीड़ा करते हैं।

***सूत उवाच***

**शृण्वन्तु मुनयः सर्वे सुगोप्यं वचनं मम ।।**

**न कस्याग्रेऽपि कथितं साम्प्रतं कथयामि वः ।। २३ ।।**

सूत जी बोले कि हे मुनियों ! तुम मेरे अत्यन्त गुप्त वचनों को श्रवण करो मैंने आज तक यह वृत्तान्त किसी के निकट नहीं कहा है उसे मैं आप से इस समय कह रहा हूँ।

**पुरावृत्ते तु मुनयो दृष्टं मे महदद्भुतम् ।।**

**एकदा नारदो यातः श्वेतद्वीपमनुत्तमम् ।। २४ ।।**

हे ऋषियों ! मैंने पूर्व के इतिहास में एक बड़ा अद्भुत चरित्र देखा है एक समय देवर्षि नारद जी अत्युत्तम श्वेतद्वीप को जा रहे थे।

**यत्रास्ते भगवान्विष्णुर्विभ्रच्छब्दमयं वपुः ॥**
**दर्शनार्थं भगवतो गतः स परमात्मनः ॥ २५ ॥**

जहाँ शब्दमय विष्णु भगवान् विराजमान है वह देवर्षि नारद वहाँ परमात्मा भगवान् विष्णु के दर्शन के लिए गये।

**दृष्ट्वा नारायणस्तत्र तमित्थं समवर्द्धयत् ॥**
**मुने सुस्वागतं तेऽस्तु आगच्छोपविशस्व च ॥ २६ ॥**

नारायण ने ऋषि को आया हुआ देखकर इस प्रकार से उनके आदर को बढ़ाया कि हे मुने! तुम्हारा स्वागत है, आइए आसन ग्रहण कीजिए।

**भवतो मे प्रियश्चान्यो भक्तेषु न हि विद्यते ॥**
**लोकपर्यटने गायन्गुणान्मम समन्ततः ॥ २७ ॥**

हमारे भक्तों के बीच में आपके समान प्यारा भक्त और कोई नहीं है, संसार में भ्रमण करने के समय सर्वत्र हमारे गुणों का गान आप करते रहते हैं।

**उद्धरिष्यन्दीनजनान्विषयेष्वतिरागिणः ॥**
**दर्शनस्पर्शविषयैस्तान्कृतार्थान्करोषि वै ॥ २८ ॥**

विषय में आसक्त दीन मनुष्यों का उद्धार करने वाले तुम उन्हें दर्शन स्पर्शनादि से कृतार्थ कर देते हो।

**इदानीं मानुषे लोके का कथा वद मे मुने ॥**
**किञ्चित्त्वयाद्भुतं दृष्टमनुभूतमथ क्वचित् ॥ २९ ॥**

हे मुने! कहो तो इस समय मनुष्य लोक के क्या समाचार हैं, तुमने कहाँ पर कौन सा अद्भुत चरित्र देखा अथवा सुना उसे कहो।

**पृष्टः स तेन मुनयो जगदीशेन भास्वता ॥**
**तमवोचदिदं विष्णुं लोकवृत्तविदीश्वरम् ॥ ३० ॥**

हे ऋषिगण! उन तेजोमय जगदीश्वर के पूछने पर नारद जी संसार के चरित्रों को जानने वाले भगवान् विष्णु से इस प्रकार कहने लगे।

**अधुना त्वद्दर्शनेन चित्तं मे विशदीकृतम् ॥**
**चरँल्लोकांस्तवोद्गायँल्लीलां भुवनपावनीम् ॥ ३१ ॥**

अब तुम्हारे दर्शन करने से मेरा चित्त निर्मल हो गया, तुम्हारी संसार को पवित्र करने वाली लीला को ऊँचे स्वर से गान करते हुए लोकों में घूमते हुए जो कुछ अनुभव किया है।

**अनुभूतं श्रृणु विभो यत्किञ्चिन्मेऽधुना हरेः ॥**
**भारते मानसं नाम सरोऽस्ति पूतमुत्तमम् ॥ ३२ ॥**

हे विभो ! उसे मैं इस समय कुछ वर्णन करता हूँ, श्रवण करो। भारतवर्ष में मानस नाम का एक उत्तम पवित्र सरोवर है।

**अगाधमविषं तत्र दृष्ट्वा मे मुनयो दश ॥**
**ध्यायन्तः परमात्मानं गुणातीतं गुणोदयम् ॥ ३३ ॥**

उस अगाध निर्मल और जलयुक्त सरोवर पर सब गुणों से परे गुणोदय, परमात्मा का ध्यान करते हुए दश मुनियों को मैंने देखा।

**न श्रृण्वन्ति न पश्यन्ति न वदन्ति परं गताः ॥**
**स्थितोऽस्म्यहं चिरं तत्र कदाचितप्रवदन्ति चेत् ॥ ३४ ॥**

और परमतत्त्व से युक्त होकर, वे न देखते है न सुनते है और न बोलते है। बहुत समय से वहाँ स्थित हूँ ऐसा कभी बोलते हैं।

**एते हि नाब्रुवन्ब्रह्म संविग्न आगतस्ततः ॥**
**तद्ब्रूहि एवं हृषीकेश किं नु ध्यायन्ति ते बुधाः ॥**
**सरस्तीरं कथं याताः के ते वा वद मे प्रभो ॥ ३५ ॥**

ब्रह्म के नाम तक का भी उच्चारण नही करते, तब मैं वहाँ से उद्विग्न होकर चला आया : हे हृषीकेश ! वे ज्ञानवान् महात्मा किसका ध्यान करते हैं, वे क्यों इस सरोवर के किनारे पर आये हैं ? हे प्रभो ! इनका वृत्तान्त वर्णन कीजिए।

*अनिरुद्ध उवाच*

**नारदाद्भुतमेतच्च कथनीयं नहि क्वचित् ॥**
**तथापि च तव स्नेहात्कथयिष्यामि तच्छृणु ॥ ३६ ॥**

अनिरुद्ध जी बोले कि हे नारद ! यह बड़ा ही अद्भुत विषय है, कभी किसी से प्रकाश करने योग्य नहीं, तथापि मैं तुम्हारे स्नेह के वश से कहता हूँ तुम श्रवण करो।

**ते ध्यायन्ति महात्मानः कृष्णं वृन्दावने स्थितम् ॥**
**गोपिकारमणं कान्तं परं लावण्यभाजनम् ॥ ३७ ॥**

वे महात्मा वृन्दावन में स्थित गोपिका रमण कान्तिमान् लावण्य युक्त परमपुरुष श्री कृष्ण का ध्यान करते हैं।

**कदाचिद्ध्यायमानानामाविरासीच्चतुर्भुजः ॥**
**तं दृष्ट्वा परमात्मानं वैकुण्ठेशं रमापतिम् ॥ ३८ ॥**

उन ध्यान परायण महापुरुषों के सम्मुख कदाचित् भगवान् प्रभुं चतुर्भुज रूप से प्रकट हुए, वे उन वैकुण्ठ के अधिपति रमानाथ को देखकर।

**अर्च्चयित्वा महात्मानः प्रत्युत्थानपुरःसरम् ॥**
**तुष्टुवुः परया भक्त्या पुष्टिताञ्जलयः प्रभुम् ॥ ३९ ॥**

आसन से उठ उनकी पूजा कर परम भक्ति के साथ हाथ जोड़कर प्रभु की स्तुति करने लगे।

**प्रसन्नो भगवांस्तेषां तपसा बाधितोऽब्रवीत् ॥**
**यदभीष्टं वरं शश्वद्वरयध्वं महत्तमाः ॥ ४० ॥**

तब भगवान् उनकी तपस्या से प्रसन्न होकर बोले कि हे महात्माओं ! आप अपनी इच्छा के अनुसार वर माँगो।

**मद्दर्शनं हि भूतानां श्रेयसां परमो निधिः ॥ ४१ ॥**

मेरा दर्शन जीवों के लिए कल्याण की परम निधि है।

***महत्तमा ऊचुः***

**यदि त्वं वरदो विष्णो चास्माकन्तु वरोऽधुना ॥**
**किं तु रूपं ह्येतदेव चान्यद्वापि महत्तमम् ॥**
**को लोकः का प्रिया भूमिः क्व निवासो वदाधुना ॥ ४२ ॥**

सभी महात्मा बोले कि नारायण ! यदि आप वर देने को सन्नद्ध हुए हैं तब हम सबकी यही प्रार्थना है कि आपका महत्स्वरूप यही है या और किसी प्रकार का है और आप किस लोक में अथवा पृथ्वी के किस भाग में निवास करते हैं, और कौन सी भूमि आप को प्रिय है। यह सब बतलाइये।

***श्रीभगवानुवाच***

**अस्ति मे परमं रूपमचिन्त्यपदसौख्यदम् ॥**
**तन्नित्यं क्रीडते यत्र बल्लवीगणवेष्टितम् ॥ ४३ ॥**

श्री भगवान् बोले कि, वर्तमान रूप के अतिरिक्त हमारा एक और परम रूप है उसके दर्शन करते ही अचिन्त्यपद और परम सुख की प्राप्ति होती है, वह स्वरूप गोपियों से वेष्टित स्थान पर नित्य क्रीड़ा करता है।

**भूलोके भारते वर्षे माथुरे मण्डले शुभे ।।**
**भूमिः पवित्रातितरां तत्र वृन्दावनं महत् ।।४४ ।।**

पृथ्वी पर भारतवर्ष में पवित्र माथुर मण्डल है जहाँ विशाल अत्यन्त पवित्र भूमि है और वहीं वृन्दावन है।

**गोवर्द्धनो गिरिवरो नन्दग्रामः क्षमी प्रभुः ।।**
**प्रिया सरिद्वरा यत्र कालिन्दी शमनस्वसा ।।४५ ।।**

वहाँ पर्वतों में श्रेष्ठ गोवर्द्धन पर्वत है, उसके समीप में नन्दग्राम है और यमराज की भगिनी श्री हरि की प्रिया, नदियों में श्रेष्ठ श्री यमुना हैं। वहीं क्षमा करने वाले प्रभु श्री कृष्ण विराजमान हैं।

**इत्याकर्ण्य मुनिश्रेष्ठाः सोत्कण्ठा दर्शनोद्यतः ।।**
**ततस्तानब्रवीद्विष्णुर्माधवो मधुसूदनः ।। ४६ ।।**

भगवान् के यह वचन सुनकर वे मुनि श्रेष्ठ उत्कण्ठा के साथ उस स्वरूप के दर्शन करने के निमित्त उद्यत हुए, इसके बाद मधुसूदन विष्णुभगवान् उनसे बोले।

**यादृशेनाद्य तपसा सम्यगाराधितोऽस्म्यहम् ।।**
**एतादृशानां तपसां कोटिभिर्नापि लभ्यते ।। ४७ ।।**

आज तुमने जैसी तपस्या से हमारी सम्यक् पूजा की है, ऐसी करोड़ों तपस्याओं के द्वारा भी यह स्वरूप प्राप्त नहीं हो सकता है।

**इत्युक्त्वान्तर्दधे विष्णुः स्वर्लोकं भास्वरं ततः ।।**
**तेऽथ चित्तं समाधाय ध्यानञ्चक्रुरतन्द्रिताः ।। ४८ ।।**

ऐसा यह कहकर विष्णुभगवान् अन्तर्ध्यान होकर दीप्तिमान् स्वर्ग को चले गये, इसके बाद वे मुनि तन्द्रा रहित समाधिष्ठ होकर ध्यानं करने लगे।

**पुनस्ततोऽतितपतामाविरासीत्तथा प्रभुः ।।**
**तथापि न वरं चेष्टं ददौ तेभ्यः कृपान्वितः ।। ४९ ।।**

इस प्रकार से घोर तपस्या के करने से विष्णुभगवान् फिर आविर्भूत हुए तथापि कृपान्वित भगवान् उन्हें अभीष्ट वर न दे सके।

**शरीराणि गृहीतानि कालकुक्षौ पुनः पुनः ॥**
**न कर्मजनितान्येव तपसा सञ्चितानि हि ॥ ५० ॥**

काल के गर्भ में बारम्बार नये-नये शरीरों को ग्रहण करने लगे, उनके वे नवीन शरीर कर्म जनित नहीं थे, वे स्वयं तपस्या से सञ्चित थे।

**अस्थीनि न विनश्यन्ति देहान्तरमनुक्रमात् ॥**
**कालो हि गमितो यावान्करकांश्च यथामिताः ॥ ५१ ॥**

जब वे क्रमशः शरीर धारण करते थे तब उनकी हड्डियाँ नष्ट नहीं होती थीं, जितना समय बीतने लगा उसी के अनुसार वे ओलों के समान अपरिमित होते गये।

**तद्वदामि मुनिश्रेष्ठ शृणुष्वावहितोऽधुना ॥**
**एकैकस्य शरीराणि कोटिकोटिशतानि च ॥ ५२ ॥**

हे मुनिश्रेष्ठ ! उसे मैं कह रहा हूँ, सावधान होकर श्रवण करो। उनमें एक एक के देह की संख्या करोड़ो सहस्र थी।

**पतितानि मुनिश्रेष्ठ कल्पे कल्पे विपर्य्ययम् ॥**
**एतावन्ति गमिष्यन्ति शरीराणि यदा मुने ॥ ५३ ॥**

हे मुनिराज ! इस प्रकार प्रत्येक कल्प में विपर्यय रूपेण पतित इतने शरीर जब विनष्ट हो जायेंगे।

**तदा वृन्दावनं प्राप्य तपस्त्यागो भविष्यति ॥**
**प्रेमभक्तिरतानाञ्च शरीराणि नवानि हि ॥ ५४ ॥**

तब वृन्दावन प्राप्त होगा और उनकी तपस्या छूट जायेगी। प्रेम और भक्तिपरायण होकर वे महात्मा नवीन देह को धारण करेंगे।

**भविष्यन्ति न सन्देहः सुखं प्राप्स्यन्ति ते भृशम् ॥**
**इत्याकर्ण्य मुनिश्रेष्ठो द्रष्टुमुत्कण्ठितोऽभवत् ॥ ५५ ॥**

तब वे अत्यन्त सुख को भोगेंगे यह वचन सुनकर मुनिश्रेष्ठ नारदजी उनके दर्शन के लिए अत्यन्त उत्कण्ठित हुए।

**स्मरन्वृन्दावनं भूयो नारदः प्रणनाम ह ॥**
**त्वमाज्ञापय गच्छामि ह्यनिरुद्धस्त्वथाब्रवीत् ॥ ५६ ॥**

नारद जी वृन्दावन को स्मरण करते हुए बारम्बार प्रणाम करने लगे, और कहा कि आप मुझे आज्ञा दें मैं जाता हूँ तब भगवान् अनिरुद्ध बोले।

**कथं मुने त्वया ज्ञातमश्रुतं कारणं परम् ॥**
**प्रयाहि त्वं महारण्ये स्नात्वा सरसि मानसे ॥ ५७ ॥**

हे मुनि ! यह अश्रुत परम कारण तुमने किस कारण से जाना। तुम मानसरोवर में स्नानकर उस महावन को प्रस्थान करो।

**कदा हि भगवान्कृष्णो दर्शनं दास्यति स्वयम् ॥**
**इत्युक्तो लोकगुरुणा नारदो मुनिसत्तमः ॥ ५८ ॥**

मुनिश्रेष्ठ नारद जी संसार के गुरु से इस प्रकार उपदेश प्राप्त कर "अरे भगवान् श्री कृष्ण कब हमें स्वयं दर्शन देंगे।"

**वदन्नित्थं प्रतस्थे स हृदि ध्यायन्हरिं ततः ॥**
**तत्र दृष्ट्वा सरो दिव्यं नानाद्रुमसमाकुलम् ॥ ५९ ॥**

इस प्रकार से कहते-हुए भगवान् श्री हरि का हृदय में ध्यान करते हुए नारद जी चले। इसके बाद उन्होंने जाकर देखा कि वह दिव्य सरोवर अनेक द्रुम लताओं से युक्त है।

**महन्मनः प्रख्यजलं वायुना परिसेवितम् ॥**
**हंसकारण्डवाकीर्णं चक्रवाकोपसेवितम् ॥ ६० ॥**
**विचित्रकमलासन्नं नृत्यद्भ्रमरसङ्कुलम् ॥**
**दृष्ट्वैव तत्सरः शीघ्रं स्नानार्थं प्राविशत्तदा ॥ ६१ ॥**

पवन से सेवित, हंस, सारस तथा चकवा चकवियों से युक्त विचित्र कमलों से शोभायमान नृत्यपरायण भौंरों से सुशोभित बड़े भारी मानस के समान जलयुक्त सरोवर को देखते हुए, नारद जी ने उसी समय उसमें स्नान करने के लिए प्रवेश किया।

**स्नात एवाभवत्कन्या नासीत्तल्लिङ्गसंस्मृतिः ॥**
**दृष्ट्वा कन्यातनुं स्वीयां विस्मयः परमो ह्यभूत् ॥ ६२ ॥**

वे स्नान करते ही कन्या रूप हो गये, उन्हें उस लिङ्ग की स्मृति भी न रही और उस कन्या रूपी अपने शरीर को देखकर वे अत्यन्त विस्मित हए।

**तदा कन्यास्वरूपेण नारदस्त्वित्यचिन्तयत्॥**
**कुतोऽहं संस्थिता कन्या को वाऽभावो ह्यभून्मम॥ ६३॥**

उस समय नारद कन्या रूपी होकर यह चिन्ता करने लगे कि मुझ में, किस वस्तु का अभाव हो गया जिससे मैं कन्या हो गया हूँ।

**एवञ्च कन्यातन्वा तु विस्मयः परमो ह्यभूत्॥**
**तदा कन्यास्वरूपिण्या होदिता ह्यहमेकया॥ ६४॥**

इस प्रकार कन्या के शरीर से वे परम विस्मय को प्राप्त हुए उसी समय एक दूसरी कन्या ने मुझसे पूँछा।

**दृष्ट्वा च कन्यकां सा मामपृच्छदिदमद्भुतम्॥**
**कासि कस्यासि वामोरु किमर्थमिह तिष्ठसि॥ ६५॥**

उसने मुझे कन्या देखकर पहले यह अद्‌भुत प्रश्न किया कि हे वामोरु! तुम कौन हो? किसकी स्त्री हो? और इस स्थान पर किस कारण से स्थित हो?

**किमन्वेषयसीह त्वं किं चित्ते विस्मितं त्विह॥**
**कथय त्वमिदं मेऽद्य यत्ते मनसि वर्त्तते॥ ६६॥**

क्या तुम इस स्थान पर किसी को ढूँढ रही हो, या तुम्हारा चित्त विस्मय को प्राप्त हुआ है? तुम्हारे मन में जो वार्ता है उसे अब मुझे बतलाओ।

**अद्य ते दर्शनात्प्रीतिर्मनसाऽतिप्रवर्तिता॥**
**इत्याश्रुत्य वचस्तस्याः कन्यायाः सा च मानदा॥ ६७॥**

आज तुम्हारे दर्शन से मेरे मन में अत्यन्त प्रीति उत्पन्न हुई, उस कन्या के ऐसे अद्‌भुत वचन सुनकर मान को बढ़ाने वाली।

**उवाच वचनं चारू कन्या या मानसोद्भवा॥**
**अहं ते गुणसम्पत्या जातास्मि वशवर्तिनी॥ ६८॥**

मानस सरोवर से उत्पन्न हुई नारद नाम्नी कन्या इस प्रकार से सुन्दर वचन बोली कि मैं तुमको गुणवती देखकर अत्यन्त वशीभूत हो गयी हूँ।

**अतो हार्दं प्रकथये यदुद्यं परिवर्त्तते ।।**
**शृणु मे वचनं भीरु यद्दृष्टाहं त्वयाधुना ।। ६९ ।।**

इस कारण अनुराग के साथ आज तक जो कुछ चरित्र हुआ है वह मैं तुमसे यथावत् कहती हूँ, तुम जिस कारण से आज मुझको इस स्थान में देखती हो हे भीरू ! उसी वार्ता का श्रवण करो ।

**वृन्दावनगता भूमिः पवित्राऽऽनन्दसद्म च ।।**
**सर्वसौख्यप्रदः साक्षात्कृष्णो वृन्दावनेश्वरः ।। ७० ।।**

वृन्दावन की भूमि अत्यन्त पवित्र और आनन्द की देने वाली है, सर्वसुख के देने वाले साक्षात् श्री कृष्ण उस वृन्दावन के सनातन स्वामी होकर विराजमान हैं ।

**श्यामाङ्गसुन्दरः सौम्यः साक्षान्मन्मथमन्मथः ।।**
**पीताम्बरधरः स्रग्वी शिखिपुच्छावतंसकृत् ।। ७१ ।।**

वे श्यामशरीर, सुन्दर सौम्य, साक्षात् कामदेव के मन को मोहित करने वाले, पीताम्बर धारण किये हुए तथा मोर के पंख का शिरोभूषण किये हुए हैं ।

**कोटीन्दुसूर्य्यसदृशो गोपिकावृन्दसंवृतः ।।**
**क्रीडन्नहो रमयति राधिकां वृषभानुजाम् ।। ७२ ।।**

करोड़ों सूर्य और चन्द्रमा के समान कान्तिमान् गोपियों से घिरे हुए श्रीकृष्ण के साथ मिलकर क्रीड़ा करते हुए वृषभानु की पुत्री राधा जी के साथ रमण करते हैं ।

**क्षणं नोपरमेत्तत्र क्रीडते च दिवानिशम् ।।**
**कुञ्जे कुञ्जे लताकुञ्जे शय्याः कुसुमनिर्मिताः ।। ७३ ।।**

वहाँ दिनरात इस प्रकार की क्रीड़ा होती रहती है, क्षण भर को भी विराम नहीं होता प्रत्येक कुञ्ज तथा लताकुञ्ज में फूलों की सुन्दर शय्या अलङ्कृत है ।

**इत्यानन्दमया यत्र प्रवहति रसाब्धयः ।।**
**यत्रैवामरमुख्यानां न प्रवेशः कथञ्चन ।। ७४ ।।**

जिस स्थान पर इस प्रकार के आनन्द रस का समुद्र प्रवाहित होता है, उस स्थान पर देवताओं के अग्रणी का भी प्रवेश असम्भव है।

**के योगिनो वराका हि तपोदानपराश्च ये ॥**
**श्रीपतेरतिभक्तानां सुप्रवेशः कथञ्चन ॥ ७५ ॥**

योगियों के सामान्य तप दान करने की तो बात दूर जाने दो अपितु स्वयं श्री कृष्ण भगवान् के भक्त भी प्रवेश नहीं कर सकते हैं।

**दूतिकाः सुविलासिन्यश्चाष्टौ स्युः परिचारिकाः ॥**
**ताश्चैवास्मिन्वने रम्ये विचरन्ति मुदान्विताः ॥ ७६ ॥**

उत्तम विलासवाली आठ स्त्रियाँ वहाँ स्थित रहकर प्रभु की परिचारिका होकर दौत्यकर्म करती हैं, वे इस सुन्दर वन में आनन्द के साथ घूमती हैं।

**गोपालाश्चैव क्रीडन्ते देवनार्यः समन्ततः ॥**
**श्रमादेतत्स्थलं प्राप्य सानन्दं गोभिरन्वितम् ॥ ७७ ॥**

परिश्रम से इस स्थल को प्राप्त करके गायों से युक्त गोपगण तथा अप्सराएं क्रीडा करती हैं।

**जलस्थलवनक्रीडारासलीलाविभेदतः ॥**
**वृषभानुसुता तत्र क्रीडते स्वसखीजनैः ॥ ७८ ॥**

जल तथा स्थल पर वन में क्रीडा तथा विभिन्न प्रकार की रास लीलाओं से राधा जी अपनी सखियों के साथ खेलती है।

**गौराङ्गी नीलवसना स्वर्णरत्नविभूषिता ॥**
**सुनूपुरपदाघातमुखरीकृतदिङ्मुखा ॥ ७९ ॥**

गौर अङ्गवाली नीले वस्त्र धारण किये सुवर्ण और रत्नों से विभूषित वृषभानुनन्दनी श्री राधिका जी चरणों में पहने हुए नूपुर की ध्वनि से दिशाओं को शब्दित करती हुई नृत्यक्रीडा करती हैं।

**किमहं वर्णये तत्र यत्सुखं सम्भवेन्मम ॥**
**करोमि किं दर्शनार्थं वद सौम्ये कृपान्विते ॥ ८० ॥**

वहाँ जिस परम सुख का उदय होता है उसे मैं वर्णन करने में असमर्थ हूँ, हे सौम्ये कृपान्विते ! उसके दर्शन हेतु मैं क्या करूँ, आप मुझसे बतलाइये।

*कन्योवाच*

**वृन्दावनेश्वरं भद्रे निवेदय ममागमम् ॥**

**नहीश्वराणां भवने प्रवेशो भवति स्वयम् ॥ ८१ ॥**

कन्या बोली कि, हे भद्रे ! मेरे आगमन की वार्ता पहले वृन्दावन के स्वामी से निवेदित करो। क्योंकि ऐश्वर्यवान् महात्माओं के भवन में प्रवेश स्वयं नहीं हो सकता है।

*सूत उवाच*

**इत्युक्ता सा ततो गत्वा कृष्णान्तिकमुवाच ह ॥**

**कृष्ण कृष्ण कृपासिंधो गोपिकाप्राणवल्लभ ॥ ८२ ॥**

सूत जी बोले कि इसके बाद यह कहकर वह स्त्री श्री कृष्ण के समीप गई और जाकर बोली कि हे कृष्ण ! हे कृपासिन्धु ! गोपिकाओं के प्राण बल्लभ !

**श्रृणुष्व वचनं वाग्मिन्दृष्टं यन्महदद्भुतम् ॥**

**चरन्ती विपिने कन्या दृष्टा मानससत्तटे ॥ ८३ ॥**

हे वाग्मिन् मेरी बातें सुनो !मैंने आज एक बड़ा अद्भुत चरित्र देखा है, मानसरोवर के तट पर वन में एक कन्या को घूमते हुए देखा है।

**रूपमत्यद्भुतं तस्याः कथ्यते किं तवाग्रतः ॥**

**न भूतले न पाताले न देवभवने क्वचित् ॥ ८४ ॥**

उसका रूप बड़ा अद्‌भुत है, तुम्हारे निकट उसके स्वरूप का वर्णन क्या किया जाय, पृथ्वी, पाताल, देवलोक कहीं भी वैसा रूप नहीं है।

**दृश्यं रूपं भवेत्तस्यास्त्वहं जाने प्रभान्वितम् ॥**

**कारणं किं न जानामि कथं तत्र स्थिता शुभा ॥ ८५ ॥**

उसके समान कान्तिमान् रूप का दर्शन होना सम्भव नहीं वह शुभ गुणवाली कन्या वहाँ क्यों विराजमान है उसका कारण भी मैं नहीं जानती।

**सर्वं त्वं वेत्सि भगवन्यथारुचि कुरु प्रभो ॥**

**सख्या वचनमाकर्ण्य मुदितो भगवान्हरिः ॥ ८६ ॥**

हे भगवन् ! हे प्रभु ! तुम सब जानते हो इस समय जो रुचि हो वह करो, भगवान् श्री कृष्ण अपनी सखी के वचनों को सुनकर अत्यन्त आनंदित हुए।

**व्रजस्त्रियोऽपि मुदितं दृष्ट्वा चोत्कण्ठितं भृशम् ॥**
**कृष्णं विज्ञापयामासुः कन्यकादर्शनं प्रति ॥ ८७ ॥**

ब्रजनारियों ने श्री कृष्ण को प्रफुल्लित और उत्कण्ठित देखकर उनसे उस कन्या के दर्शन करने हेतु विज्ञापित किया।

**ततः प्रोवाच ताः कृष्णः शृणुध्वं व्रजयोषितः ॥**
**स्त्रीणां चलस्वभावोऽयं कौतुकाय मनश्चलेत् ॥ ८८ ॥**

इसके बाद श्री कृष्ण बोले कि, हे व्रज की युवतियों! मेरी एक बात सुनो सभी स्त्रियों का चञ्चल स्वभाव है और, कौतुक के लिए उनका मन चपल हो जाता है।

**मम यानं तदग्रे तु चैककस्य न युज्यते ॥**
**तस्मात्तत्र तु गन्तव्यं भवतीभिः प्रयत्नतः ॥ ८९ ॥**

उसके सन्मुख मेरा अकेले जाना उचित नहीं, इस कारण प्रयत्न पूर्वक उस स्थान पर आप लोगों को भी जाना होगा।

**दृष्ट्वा रूपं तु युष्माकं विस्मितात्रागता भवेत् ॥**
**तस्यै सुखं प्रदातव्यं सर्वमस्माभिरेव तु ॥ ९० ॥**

तुम्हारे स्वरूप को देखकर विस्मृत होकर इस स्थान में आ जाय, तो मैं उसको सब प्रकार के सुख दूँगा।

**कुरुध्वं मण्डलं गोप्यो पादन्याससुशोभितम् ॥**
**चलध्वं तत्र तां द्रष्टुं मया सह समन्ततः ॥ ९१ ॥**

हे गोपिकाओं! पादन्यास से सुशोभित रासलीला का शीघ्र ही शोभायमान मण्डल बनाओ, इसके बाद उसे देखने के लिए मेरे साथ वहाँ चलो।

**ततो मण्डलमध्यस्थो विरेजे भगवान्स्वयम् ॥**
**यथा रासनिशाः शश्वत्तथा यातास्तदीहया ॥ ९२ ॥**

इसके पश्चात् श्री कृष्णभगवान् स्वयं उस रासमण्डल के बीच में विराजमान हुए, जैसे रास की रात्रियां निरन्तर उनकी इच्छा से चल रही हों।

**वनं कुसुमितं तावद्गायका विहगा जगुः ॥**
**रत्युपायीकरञ्चासीत्तदैव विपिनं महत् ॥ ९३ ॥**

सम्पूर्ण वन प्रफुल्लित हो गये और पक्षी मधुर स्वर से गान करने लगे, उस समय वह महत् वन सर्वथा रति के साधन स्वरूप हो गया।

*ऋषयः ऊचुः*

**कति गोप्यः कथं कृष्णो बहुभिः क्रीडते वने ॥**

**एको वा बहुरूपो वा यथावत्प्रमदाकुलैः ॥ ९४ ॥**

ऋषि बोले कि, गोपिकाओं की सङ्ख्या तो अपरिमित थी परन्तु वन में कृष्ण जी इतनी गोपिकाओं के साथ किस प्रकार से क्रीड़ा करते थे? वे एक रूप होकर या बहु रूप होकर रमणियों के साथ यथावत् विहार करते थे।

**कदा क्रीडासमारम्भः सदा वा कालतोऽपि वा ॥**

**अस्माकं महदौत्सुक्यं तत्क्रीडाश्रवणाय हि ॥ ९५ ॥**

किस समय क्रीड़ा आरम्भ होती थी? वह सर्वदा होती रहती थी अथवा समय से होती थी? उस क्रीड़ा को श्रवण करने हेतु मेरा अत्यन्त औत्सुक्य है।

**तवात्र श्रद्दधानानां ब्रूहि त्वं कृपया मुने ॥ ९६ ॥**

हे मुने! इसमें श्रद्धा रखने वाले मुझ से कृपा करके आप कहिए।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके सूतशौनकसंवादो नाम नवमोऽध्यायः ॥ ९ ॥*

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में नवम अध्याय समाप्त ॥*

# दशमोऽध्यायः

*सूत उवाच*

**नारदस्त्वेकदा यातः सत्यलोकं सनातनम्।**
**तत्रोपविष्टं सदसि श्रुतीनां मूर्तिसम्भृताम् ।।१ ।।**

**पितरं सर्वशास्त्रज्ञं सर्ववेदान्तपारगम् ।।**
**दृष्ट्वा तमुपसङ्गम्य पप्रच्छैव मुनीश्वराः ।।२ ।।**

सूतजी बोले कि हे मुनीश्वरो ! एक समय देवर्षि नारद जी सनातन सत्य लोक को गये वहाँ सभा में सुख पूर्वक बैठे हुए और मूर्तिमान् श्रुतियों के पिता समस्त शास्त्रों के मूर्त्तिमान् वेदान्त ज्ञाता पारगामी भगवान् को देखकर उनके समीप जाकर पूछा।

**तत ऊचे पुरा वृत्तंयातं स भगवानजः ।।**
**तदहन्तु प्रवक्ष्यामि शृण्वन्तु मुनिसत्तमाः ।। ३ ।।**

इसके बाद भगवान् अज ने कहा कि जो प्राचीन आख्यान आया है उसी को मैं कह रहा हूँ कि हे मुनिसत्तम ! आप लोग सुनें।

*भगवानुवाच*

**संहृत्येदं जगत्सर्वं सुप्तशक्तिरथोक्षजः।**
**मयि लीनमिदं सर्वं रहो निःसारयामि तत् ।। ४ ।।**

श्रीभगवान् कि निखिल जगत् को संहार करके भगवान् विष्णु प्रसुप्त होकर फिर अपने में लीन कर लेते है, तत्पश्चात् मैं उसे एकान्त में निकालता हूँ।

**रहस्यमहमेकोऽत्र चेत्यालोचितवान्स्वयम्।**
**तदा विष्णोर्नाभिरुढमब्जमासीदनुत्तमम् ।। ५ ।।**

तब मैं अकेला भी इस विषय में स्वयं एक रहस्य दिखाता हूँ, उस समय विष्णु भगवान् की नाभि में एक अत्यन्त उत्तम कमल था।

यही वही भूतल है जहाँ श्री राधा माधव का निवास है, वे राधामाधव सुख पूर्वक इस अनन्त लीला में रत रहते हैं।

**क्रीड़ेते नित्यमेवातो मुदं यान्ति सखीजनाः ॥**
**सदा बिहारी कृष्णस्तु श्रीराधाप्रेमयंत्रितः ॥६४॥**

जब ये दोनों खेलते है तो सखीजन उस नित्यक्रीडा को देखकर नित्यानन्द को प्राप्त करती हैं, और सदा विहार करने वाले श्री कृष्ण भी श्री राधा के प्रेम में यन्त्रित हो जाते हैं।

**क्रीडन्न वेद चात्मानं प्रियया राधया चिरम्॥**
**हावभाववतीभिश्च नारीमण्डलकान्तिभिः ॥६५॥**

अपनी प्रिया श्री राधिका के साथ क्रीडा करते-करते तथा हाव भाव वाली नारियों के समूह की कान्ति से उन्हें अपना विस्मरण हो गया है।

**स्त्रीनायिकञ्चातितरां सुखयत्वेव या च भूः॥**
**कुञ्जपुञ्जविनोदैश्च रतिरागपयोनिधिम् ॥ ६६॥**

जो भूमि अपने कुञ्जसमुदाय के विनोद से प्रेमराग रूपी समुद्र स्त्री रूपी नायिका को अत्यधिक सुख देती है।

**किशोर्य्या राधया सार्द्धं हरिं सन्दर्शये सतीम्॥**
**कथयामि ह्यनुष्ठेयं यत्र गन्तुः शुचिस्मिते ॥ ६७॥**

हे पवित्र स्मिति वाली! मैं तुमको उसी किशोरी श्री राधिका के साथ लीला करते हुए नित्य किशोर श्री कृष्ण का दर्शन कराऊँगी, और गमन करने वाले के लिए जहाँ जो अनुष्ठेय है बतलाऊँगी।

**दुष्प्रेक्षणीया सर्व्वेषां भूतानां गहना गतिः॥**
**बलीयसी प्रभोरिच्छा नापमार्ष्टुं हि शक्यते ॥६८॥**

सभी प्राणियों की गहनगति दर्शनीय नहीं है। प्रभु की इच्छा बलवती है उसे हटाया नहीं जा सकता है।

**रहो विशेषसमये प्रवेशः स्यात्तदिच्छया॥**
**इत्याश्वास्य सखी कन्यामाजगामान्तिके तयोः ॥६९॥**

उनकी इच्छा से विशेष समय में उस एकान्त स्थान में प्रवेश होगा, सखी कन्या को ऐसा आश्वासन देकर उन राधा माधव के पास आयी।

**राधामाधववयोराशु नन्दिनी प्रेमसङ्गता ॥**
**चिरं विलोक्य वदनं तयोः सङ्क्रीडमानयोः ॥ ७० ॥**

राधा माधव की प्रेमिका नन्दिनी शीघ्र क्रीडा करते हुए उन दोनों के मुख को देर तक देखकर।

**मौनमाश्रित्य सर्व्वज्ञा लेभे सुखमनुत्तमम् ॥**
**तत्सुखं वेत्ति सा नित्यं नन्दिनी हि तयोः प्रिया ॥ ७१ ॥**

उस सर्वज्ञा ने मौन रह रहकर उत्तम सुख को प्राप्त किया। उस सुख का अनुभव केवल वह नन्दिनी ही कर सकती थी जो उनकी प्रिया है।

**शक्यते न हि तद्द्रष्टुं ब्रह्मरुद्रादिकैरपि ॥**
**विलोक्य सुचिरं क्रीडास्तयोः सा रममाणयोः ॥७२ ॥**

नन्दिनी ने जो विहार देखा वह ब्रह्मादि देवताओं को भी देखना दुर्लभ है, इस प्रकार रमण करते हुए उनकी क्रीडा को थोड़ी देर देखकर।

**पश्चात्सा कथयामास कन्यायाः सुखदागमम् ॥**
**हरेर्माया समानीता कन्या प्रणयिनी तव ॥७३ ॥**

पश्चात् उसने कन्या का सुखद आगमन बतलाया कि भगवान् की माया से तुम्हारी प्रणयिनी कन्या आयी है।

**आगता सा मया सार्द्धमदूरेऽस्ति व्यवस्थिता ॥**
**यां निक्षिप्य मयि प्रेष्ठामन्यस्थानं गतो भवान् ॥७४ ॥**

वह इस समय हमारे साथ आकर भगवान् के दर्शन की अभिलाषा से दूर खड़ी हुई है, जिस प्रिया को आप मुझे अभिन्यस्त करके अन्य स्थान को गये थे।

**तवाज्ञया समानीता किं करोमि वद प्रभो ॥**
**भगवांस्तामुवाचेदं धन्यासि त्वं ममानुगा ॥७५ ॥**

इस समय मैं आपकी आज्ञा से ही इसे यहाँ पर लायी हूँ, अतः हे प्रभो! मैं क्या करूँ, बताइये भगवान् श्रीकृष्ण उससे बोले कि हे नन्दिनी! तुम मेरे पीछे चलने वाली हो, धन्य हो।

**आनीय दर्शयेमां त्वं श्रीराधामानमुत्तमम्।**
**निकुञ्जमन्दिरे राधा तिष्ठत्यत्र विलासिनी ॥७६ ॥**

तुम उसको इस स्थान पर लाकर विलासिनी श्री राधा के उत्तम मान को दिखाओ, सम्प्रति श्री विलासिनी राधिका लता भवन में मान किये स्थित है।

**मानिनी मानमासाद्य रसरूपं मनोरमम्॥**
**निकुञ्जतरुमासाद्य स्थास्येऽहमधुना सखि ॥७७॥**

वह मानिनी शृङ्गार रूप सुन्दर मान प्राप्त करके स्थित है। अतः हे सखि! अब भी लतागृह में पहुँचकर बैठता हूँ।

**उभयोरन्तरं दूरे दूति त्वं तु तया सह॥**
**आयाहि याहि वाक्यानि वद राधां तथैव च ॥७८॥**

हे दूति! तुम दोनों के मध्य में दूती का कार्य करके बारम्बार आकर और जाकर राधिका से मेरे और उसके वाक्य बतलाओ।

**विनयं मे प्रियामानं कन्यायै त्वं प्रदर्शय॥**
**इत्युक्त्वा नन्दिनी नेतुं गता कन्यां वरानने ॥७९॥**

हे वरानने ! मेरी विनम्रता और राधा के मान को तुम इस कन्या को दिखाना, नन्दिनी यह कहकर कन्या को उस स्थान पर लेने हेतु गयी।

**आनीय दर्शयामास निकुञ्जभवनं महत्॥**
**चामीकरमयी भूमिर्वस्त्ररत्नविभूषिता ॥८०॥**

वह उसे लाकर इस मनोहर स्थान को दिखाने लगी। यहाँ स्वर्णमयी भूमि वस्त्र और रत्न इत्यादि से विभूषित है।

**नानामणिगणोपेतं तत्रास्ते मन्दिरं परम्॥**
**चित्रमद्भुतसोपानं वितानशयनाशनैः ॥८१॥**

नाना प्रकार की मणियों से युक्त परम मन्दिर वहाँ स्थित है, जहाँ विचित्र सोपान और मण्डप, शयन तथा भोजन आदि शोभित हो रहे हैं।

**विराजितं यत्र तत्र सरोवरसमन्वितम्॥**
**सुगन्धिनीरसं सिक्तं कृष्णागुरुसुधूपितम् ॥८२॥**

यत्र तत्र सरोवरों से युक्त, सुशोभित सुगन्ध जल से सिक्त और काले अगर से धूपित।

**हंसकारण्डवाकीर्णं कलकोकिलकूजितम्॥**
**शीतमन्दसुगन्धेन वायुना परिवीजितम् ॥८३॥**

हंस, सारस, बगुले इत्यादि जलचर विहङ्ग जन्तुओं के कोलाहल से पूर्ण और सुन्दर कोकिल से कूजित है। शीतल, मन्द सुगन्ध पवन प्रवाहित होकर जहाँ व्यजन का काम कर रही है।

**आरामोपवनामोदमत्तभ्रमरनादितम्॥**

**सुगन्धिनीरसं सिक्तं सर्व्वलोकमनोहरम् ॥८४॥**

समस्त वाटिकाओं तथा उपवनों में मत्त भ्रमरों के गुञ्जार से शब्दित, सुगन्धिनी रस से सिक्त तथा सर्वलोक मनोरम है।

**मनोरमं वरस्त्रीणां नयनानन्दवर्द्धनम्॥**

**षडूर्म्मिरहितं शान्तमनित्यद्रव्यवर्ज्जितम् ॥८५॥**

श्रेष्ठ स्त्रियों के नयनानन्द को बढ़ाने वाला, छः प्रकार की ऊर्मियों से रहित, शान्त और अनित्य द्रव्यों से रहित यह मनोरम स्थान है।

**तन्मध्ये राधिकां देवीं सर्व्वलक्षणसंयुताम्॥**

**भासयन्तीं वनं सर्वं स्वाङ्गकान्त्या वराननाम् ॥८६॥**

ऐसे उपवन के मध्य में देदीप्यमान सर्व लक्षण सम्पन्ना राधिका जी अपने अङ्गों की कान्ति से समस्त वन को प्रकाशित करती हुई।

**अनेकहावभावादि द्योतयन्तीं वनेश्वरीम्॥**

**सर्व्वविश्वेशभावेन मानितां मृगलोचनाम् ॥ ८७॥**

अनेक प्रकार के हावभावों को द्योतित करने वाली निखिल विश्व के स्वामी श्री कृष्ण के भाव से मुग्ध मृग के समान नेत्र वाली, वनेश्वरी।

**कलस्वनां कलगीतामवलोक्य शुचिस्मिताम्॥**

**न भूतले तत्सदृशी मानवी नृपसम्भवा ॥ ८८॥**

मनोहर सम्भाषण करने वाली, निर्मल हास्य करने वाली तथा सुन्दर गान वाली ऐसी उन्हें देखकर वह कन्या मन ही मन में चिन्ता करने लगी कि, इस पृथ्वी पर कोई मानुषी राजकन्या ऐसी नहीं है।

**देवानामसुराणाञ्च नागानां चापि कन्यका॥**

**गन्धर्व्वाणां तथान्येषां राधायाश्चोपमामियात् ॥ ८९॥**

देवता, असुर, नाग, गन्धर्व और अन्य कोई देवयोनि में उत्पन्न कन्या भी राधा की उपमा को प्राप्त नहीं कर सकती है।

**महामानवतीं दृष्ट्वा कन्या सा विस्मिताभवत्॥**
**वनेश्वरीं नमस्कृत्य विलोक्य च पुनः पुनः ॥ ९० ॥**

इसके बाद महामानवती वनेश्वरी के दर्शन से विस्मित हुई वह कन्या श्री राधिका को नमस्कार करके बारम्बार देखती हुई।

**बद्धाञ्जलिरुवाचेदं राधिकां स्नेहयन्त्रिता॥**
**त्वं मे राधेश्वरी माता सर्व्वेशप्राणवल्लभा ॥९१ ॥**

अञ्जली बांधकर स्नेह के वशीभूत होकर यह वचन बोली कि, हे देवि श्री राधिके! आप सर्वेश्वर श्रीकृष्ण की प्राणप्यारी और मेरी माता राधेश्वरी हैं।

**स्वभावगुणधैर्य्येण श्रीकृष्णेन वशीकृता॥**
**न त्वादृशी प्रणयिनी त्रैलोक्येऽपि विलोक्यते ॥९२ ॥**

स्वभाव तथा धैर्यगुण से श्रीकृष्ण के द्वारा वशीकृत इस त्रैलोक्य में तुम्हारे समान प्रणयिनी कोई दिखाई नहीं देती है।

**तवाधीनं जीवितं मे त्वमेवाति प्रिया हरेः॥**
**मम भाग्यप्रयोगे च चक्षुर्भ्यामवलोक्यसे ॥९३ ॥**

तुम कृष्ण की अत्यन्त प्रिया हो और तुम्हारे अधीन मेरा जीवन है मेरे भाग्य के योग से ही आज तुम्हारे दर्शन हुए हैं।

**यत्र ब्रह्मादयो देवाः प्रविशन्ति न वै क्वचित्॥**
**अन्येषामत्र का वार्त्ता मम भाग्यात्प्रवेशनम् ॥९४॥**

इस स्थान पर ब्रह्मादि देवता भी इस समय प्रवेश करने में समर्थ नहीं है अन्य की तो बात ही क्या है। यहाँ मुझे भाग्यवश प्रवेश प्राप्त हुआ है।

**यदि मे कोटिरसना भवन्ति स्तवनक्षमाः॥**
**न त्वां वर्णयितुं शक्ता ते गुणान्वेत्ति माधवः ॥९५ ॥**

यदि मैं तुम्हारी स्तुति करने के निमित्त करोड़जिह्वाओं को पाऊँ तो भी मुझसे आपके गुणों का वर्णन नहीं हो सकता, तुम्हारे उन गुणों को श्रीकृष्ण ही जानते हैं।

**यस्या गुणगणैः कृष्णः सर्व्वेशोऽपि वशीकृतः॥**
**अतस्ते शरणं प्राप्ता ममोपरि कृपां कुरु ॥९६ ॥**

तुम्हारे गुणों से भगवान् सर्वेश्वर श्री कृष्ण ने स्वयं वश होना स्वीकार किया है अतः मैं तुम्हारी शरण आयी हूँ, तुम मेरे ऊपर कृपा करो।

**अतिप्राणप्रिया विष्णोस्त्वदायत्तः स्वयं हरिः ॥**

**क्षणमात्रं त्वत्समीपान्नापसर्पति माधवः ॥९७॥**

तुम विष्णु की अत्यन्त प्यारी हो, और वह भी तुम्हारे अधीन है। तुम्हारे स्थान को श्रीकृष्ण क्षण भर के लिए भी त्याग नहीं कर सकते हैं।

**न केनापि जितः कृष्णस्तव भाग्यं मनोरमम् ॥**

**नापश्यं तत्र विश्वेशं सखीमूचे क्व मे प्रियः ॥९८॥**

श्रीकृष्ण को किसी नें अपने प्रेम से नहीं जीता है। तुम्हारा भाग्य सुन्दर है। वहाँ विश्वेश कृष्ण को न देखती हुई सखी बोली, कि मेरे प्यारे श्री कृष्ण कहाँ हैं?

**स एवास्याः समीपे चेद्भवेत्पश्यामि साम्प्रतम् ॥**

**तथा कुरु पवित्राङ्गि ह्यनयोः सङ्गमो यथा ॥९९॥**

ऐसा प्रतीत होता है कि, श्री कृष्ण श्री राधाजी के निकट नहीं है यदि श्रीकृष्ण इनके समीप होते तो उनका दर्शन अवश्य ही होता। हे पवित्र अङ्ग वाली ! जिस प्रकार से उन दम्पती का मिलन हो वही उपाय कीजिए।

**श्रुत्वाथ नन्दिनी वाक्यं कन्यामूचे पुनर्व्वचः ॥**

**कुञ्जान्तरे प्रविश्यावां राधिकाप्राणवल्लभम् ॥१००॥**

कन्या के ऐसे वचनों को सुनकर नन्दिनी पुनः बोली कि हम दोनों कुञ्ज के अन्दर चलें वहाँ राधिका जी के प्राणवल्लभ श्रीकृष्ण को।

**नमस्कृत्य ततो राधां चलिते त्वरया च ते ॥**

**तादृशे कुञ्जभवने ददृशाते हरिं प्रियम् ॥१०१॥**

इसके बाद श्री राधिका को प्रणाम कर दोनों सखी जल्दी से चलीं और उस कुञ्ज के अन्दर प्रिय हरि श्री कृष्ण का दर्शन प्राप्त किया।

**दर्शनीयतरं श्यामं किशोरमतुलोपमम् ॥**

**शिखिपिच्छावतंसञ्च सुष्ठुपीताम्बरावृतम् ॥१०२॥**

अनुपम दर्शनीय श्याम किशोर शिखिपिच्छावतंसी सुन्दर पीताम्बर को धारण करने वाले।

**पूर्णचन्द्रमुखं कृष्णकायं कञ्जविलोचनम् ।।**
**सुचारुतिलकं चारुकुण्डलद्वयमण्डितम् ।।१०३ ।।**

पूर्ण चन्द्रमा के समान सुन्दरमुख कमलनयन मनोहर तिलक वाले और सुन्दर दो कुण्डलों से अलङ्कृत।

**सुकपोलं सुनासञ्च विलोलाक्षञ्च सुभ्रुवम् ।।**
**सुकण्ठवरमालाभिः शोभमानं महाद्भुतम् ।।१०४ ।।**

सुन्दर कपोल, सुन्दर नासिका, चञ्चल नेत्र और कण्ठ रुचिर मालाओं से विभूषित अत्यन्त अद्‌भुत, सुन्दर भौहवाले।

**वनमालानिवीताङ्गं सुगन्धिद्रव्यसंप्लुतम् ।।**
**कोटिकौशेयवसनं वसनोपरिमण्डितम् ।।१०५ ।।**

वनमालाओं से निवीत अङ्ग वाले सुगन्धित द्रव्य से लिप्त करोड़ों रेशमी वस्त्रों से सुशोभित तथा वस्त्रों पर भी बने अलङ्करण वाले।

**नूपुरैः कटकैर्भान्तं मुद्रिकाङ्गुलिमण्डितम् ।।**
**सुस्मितेनावलोकेन सुखयन्तं सखीजनम् ।।१०६ ।।**

नूपुरों, कङ्कणों तथा अँगूठियों से अलङ्कृत अँगुलियों वाले मधुरमुस्कान की दृष्टि से समस्त सखियों को आनन्दित करने वाले।

**दृष्ट्वा तं नन्दिनी प्राह कुञ्जस्थां राधिकां विना ।।**
**कथं प्राणप्रियां कृष्ण त्यक्त्वा भिन्नोऽद्य वर्त्तसे ।।१०७ ।।**

उन कृष्ण को श्री राधा के बिना देखकर नन्दिनी ने कहा कि हे कृष्ण! प्राण प्रिया राधा को छोड़कर आज आप पृथक् क्यों हैं।

**क्षणं न स्थीयतेऽन्यत्र विना तां प्राणवल्लभाम् ।।**
**सा नात्र दृश्यते नाथ किमिदं कारणं वद ।। १०८ ।।**

हे नाथ! बिना उस प्राणवल्लभा राधा के आप क्षण भर स्थित नहीं होते हैं। लेकिन वह यहाँ नहीं दिखायी दे रही हैं, क्या कारण है? बतलाइये।

*नारद उवाच*

**इत्याकर्ण्य सखीवाक्यं भगवानाह तां पुनः ।।**
**मनसा कर्म्मणा वाचा नाचरेयं तदाप्रियम् ।।१०९ ।।**

नारद जी बोले कि, भगवान् श्रीकृष्ण सखी के वाक्य को सुनकर बोले, कि मैंने मन कर्म तथा वचन के द्वारा कभी भी श्री राधा के प्रतिकूल आचरण नहीं किया।

**न वेद्मि कारणं तस्या भिन्नताया मनोरमे ॥**
**श्रीलाञ्छितमनुप्रायं क्षणे कोपः क्षणे कृपा ॥११० ॥**

हे मनोरमे ! उनकी भिन्नता का कारण मैं नहीं समझ पा रहा हूँ वह प्रायः लक्ष्मी का ही लाञ्छन है कि क्षण भर में कोप और क्षण भर में कृपा होती है।

**विचित्रविभ्रमासक्तो न विभक्तः कदाचन ॥**
**तत्प्रेमकोपकेलिभ्यां नाहं व्यग्रः शुभानने ॥१११ ॥**

हे शुभानने ! विचित्र विलास से आसक्त हुआ मैं कभी उनसे विभक्त नहीं होता हूँ। उन राधा की प्रेम तथा कोप की क्रीडाओं से मैं व्यग्र भी नहीं होता हूँ।

**तस्यै या रोचते केलिस्सा मां सुखयतेऽनिशम् ॥**
**न दुःखाय कुतो रुष्टा प्रिया मे वर्त्ततेऽधुना ॥११२ ॥**

उन राधा को जो केलि रुचिकर लगती है वही निरन्तर मुझे भी सुख देती है। उसकी कोई भी वस्तु दुःख के लिए नहीं हैं। फिर भी वह प्रिया पता नहीं क्यों अब रुष्ट हो गयी है।

**गच्छाशु कन्यया सार्द्धं तत्र गत्वा निवेदय ॥**
**मद्वार्त्तां पुनरागत्य अपराधं प्रकाशय ॥११३ ॥**

हे नन्दिनी ! इस समय वहाँ जाकर तुम इस कन्या के साथ मेरी वार्ता निवेदन करो और पुनः आकर उनके प्रति मेरा अपराध भी बतलाओ।

**तां पृच्छस्वाग्रहेणैव तत्प्रियां राधिकां सखीम् ॥**
**कथं स्थिता निकुञ्जेऽस्मिन्हरिं प्राणप्रियं विना ॥११४ ॥**

अत्यन्त आग्रह के साथ उन प्राणवल्लभा राधिका से पूछो कि कृष्ण को त्याग कर किस निमित्त इस कुञ्ज में आप स्थित हैं।

**इत्यादिमधुरालापैरापृच्छ त्वमनाकुला ॥**
**पृष्टा मां किं वदेत्कान्ता ममैका प्राणवल्लभा ॥**

**दूतीविहितवाक्यैश्च समाराधय मे प्रियाम् ॥**
**अहं चेत्तत्र गच्छामि मानञ्चाधिकतां व्रजेत् ॥११५-१६ ॥**

इत्यादि मधुर बातों से अव्यग्र होकर तुम उससे पूँछना। मेरी एक मात्र प्रिया कान्ता राधा ऐसा पूँछने पर क्या कहती हैं उसे मुझे बतलाना। दूती विहित वाक्यों से प्रिया को प्रसन्न करना यदि मैं जाऊँगा तो उसका मान अधिक हो जायेगा।

**पतिः प्राणप्रियः स्त्रीणां पत्यौ मानो विराजते ॥**
**कथमन्यत्र कुर्व्वन्ति पतिप्राणाः पतिव्रताः ॥११७ ॥**

स्त्रियों का पति ही प्राणप्रिय है और उनका मान पति में सुशोभित होता है। पति प्राण पतिव्रताएँ अन्यत्र मान का आचरण कैसे करती हैं अर्थात् नहीं करती है।

**अतो याह्यनया सार्द्धं कन्यया सह नन्दिनि ॥**
**ताम्बूलकुसुमादीनि गृहीत्वा गन्धभाजनम् ॥११८ ॥**

अतः हे नन्दिनि ! तुम इस कन्या के साथ ताम्बूल पुष्प तथा सुगन्धित पात्र का उपहार लेकर उसके पास जाओ।

**दत्त्वा वचनचातुर्य्याद्धृत्वा चागच्छ मां प्रति ॥**
**सुप्रसन्नां प्रियां ज्ञात्वा गमिष्ये दयितां प्रति ॥११९ ॥**

देकर अपने वचन की चतुराई से उनके मान को हरण करके फिर सुप्रसन्न प्रिया को जानकर मैं उसके पास जाऊँगा।

**अनाराध्य प्रियां गच्छन्पतिर्लाघवमाप्नुयात् ॥१२० ॥**

प्रिया को बिना प्रसन्न किये हुए यदि पति जाता है तो पति लघुता को प्राप्त करता है।

**इति वचनविनोदं कृष्णदेवस्य श्रुत्वा**
**मधुरमिदममोघं नन्दिनी वाक्यमाह ॥**
**किमहमुपनयेयं देहि नाथाद्य वस्तु**
**तव सखिपुरतोऽहं यामि राधासमीपम् ॥१२१ ॥**

नन्दिनी श्रीकृष्ण के मधुर तथा अमोघ वचन विनोद को सुनकर कहने लगी कि नाथ ! क्या मैं ले जाऊँ वह वस्तु दीजिए मैं आप की सखी राधा के समीप जा रहा हूँ।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके नारदशौनकसंवादे राधिकामानो नाम त्रयोदशोऽध्यायः ॥१३॥*

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में राधिकामान नामक त्रयोदश अध्याय समाप्त ॥१३॥*

# चतुर्दशोऽध्यायः

*नारद उवाच*

**ततो हरिर्ददौ तस्यै ताम्बूलं कुसुमादि च ।।**
**गन्धभाजनमत्युच्चं दर्शनीयतमं शुचि ।।१ ।।**

नारद जी बोले इसके पश्चात् श्री कृष्ण जी ने नन्दिनी को अति उत्तम दर्शनीय तथा पवित्र गन्ध भाजन के साथ ताम्बूल और पुष्प आदि प्रदान किये ।

**नीत्वा ततः प्रचलिता नन्दिनी कन्यया समम् ।।**
**समाययौ निकुञ्जान्ते राधिकां कृष्णवल्लभाम् ।।२ ।।**

उन सम्पूर्ण श्रेष्ठ उपायनों को ग्रहण कर नन्दिनी उस कन्या के साथ श्री कृष्ण प्रिया राधा जी के निकट निकुञ्ज में गयी ।

**आगत्य विनयेनोच्चैरूचे कृष्णवचांसि ताम् ।।**
**किमर्थमत्र भवने स्थितास्येकाकिनी वने ।।३ ।।**

श्री राधा के समीप जाकर विनय के साथ श्री कृष्ण जी के कहे हुए वचनों को उच्च स्वर में कहा कि आप किस कारण से अकेली इस वन निकुञ्ज में बैठी हुई हो ।

**मया न शक्यते द्रष्टुं विच्छेद उभयोरपि ।।**
**प्राणप्रियां विना तन्तु त्वां विना प्राणवल्लभम् ।।४ ।।**

मैं आप दोनों के वियोग को नहीं देख सकती हूँ, मैं प्राण प्यारी से रहित श्री कृष्ण को, अथवा प्राण प्यारे से रहित श्री राधा जी को देखने में समर्थ नहीं हूँ ।

**न चाऽनभिज्ञोऽयमस्ति नागरस्तव वल्लभः ।।**
**तवार्थं गोपवेषेण क्रीडते विपिने महान् ।।५ ।।**

तुम्हारे प्राणवल्लभ नागर श्रीकृष्ण भी तुमसे अनभिज्ञ है ऐसा नहीं । वह महान् होकर भी गोपवेष से इस वृन्दावन में आपके लिए घूमते रहते है ।

**स एवातितरां दीनां कुर्व्वन्नातिविराजते ॥**

**मानिनी मानमेवात्र कुर्व्वती परिशोभते ॥६॥**

तुम्हे इस प्रकार अत्यन्त दीन करते हुए वह भी सुशोभित नहीं होते हैं। यहाँ तो मानिनी केवल मान करती हुई ही सुशोभित होती है।

**यदि स्यान्नायको मानी नान्यथासौ निरर्थकः ॥**

**मानिनी पटुतामेति पत्यौ मानं प्रकुर्व्वति ॥७॥**

यदि नायक मानी नहीं है तो वह अन्यथा सिद्ध निरर्थक है। इसी प्रकार मनिनी स्त्री पति में मान करती हुई पटुता को प्राप्त करती है।

**गुणराशिप्रियात्यन्तं सा त्वं नान्या कदाचन ॥**

**किमत्र कारणं कान्ते वृथा मानो न राजते ॥८॥**

हे कान्ते ! तुम गुणवती प्रिया हो, तुम्हारे समान अन्य कोई कभी नहीं हो सकती है। किस कारण से वृथा मान करती हो, तुम्हारा वृथा मान करना शोभा नहीं देता है।

**किमद्य मौनमाश्रित्य स्थितासीत्युत्तरं वद ॥**

**त्वमाकर्णय मद्वाक्यं ताम्बूलं पुष्पचन्दनम् ॥९॥**

तुम किस कारण से आज मौन धारण करके बैठी हुई हो, उत्तर तो दीजिए और तुम मेरे वाक्य को सुनो। मैं श्री कृष्ण के पास से लाये हुए ताम्बूल पुष्प और चन्दन इत्यादि को लाई हूँ।

**गृहाण हरिणा दत्तं प्रीत्याहं प्रेषितास्मि भोः ॥**

**इत्याकर्ण्य ततः प्राह सखीं राधा वराङ्गना ॥१०॥**

आप ग्रहण कीजिए हरि ने इन समस्त द्रव्यों को देकर तुम्हारे सन्तोष के निमित्त मुझे तुम्हारे पास भेजा है, इन बातों को सुनकर वह वराङ्गना श्री राधा जी सखी से कहने लगी।

**देहे न केवला श्रेष्ठा मनस्यपि विराजिताः ॥**

**भवन्ति योषितः शश्वत्परचित्तहरास्तथा ॥११॥**

केवल शरीर में ही श्रेष्ठ नहीं अपितु मन में अलङ्कृत होने वाली स्त्रियाँ दूसरे के चित्त को हरण करने वाली होती है।

**यदि तासां वशे याति किं करिष्यति मादृशीम् ।।**
**न जाने क्व गतः कान्तो मां त्यक्त्वाऽत्र वनान्तरे ।।१२ ।।**

यदि ऐसी स्त्रियों के वश में वे हैं तो मेरी जैसी को क्या करेंगे। मैं नहीं जानती कि मेरे कान्त मुझे छोड़ कर इस वन में कहाँ चले गये हैं।

**कितवः कुरुते धाष्टर्य त्वन्मुखेन वरानने ।।**
**यदि शुद्धं मनस्तस्य स्वयं किमिति नागतः ।।१३ ।।**

हे वरानने ! उस परम प्रिय ने तुम्हारे मुख द्वारा धृष्टताचरण किया है, यदि उनके मन में किसी प्रकार का कपट न होता तो वे स्वयं क्यों नहीं आये।

**परं जानेऽत्र चातुर्य्यं कुत्राप्यभिरतोऽन्यतः ।।**
**आदौ च सखि हृत्वा मां विनयो न विराजते ।।१४ ।।**

वे तो अन्य स्त्री में आसक्त हुए है, उसी से इस प्रकार की चतुरता करते हैं यही हमें विदित हुआ है, हे सखि प्रथम मेरे चित्त का हरण करके पश्चात् विनय करना किसी प्रकार से शोभा नहीं देता है।

**त्वरा गच्छानया सार्धं सख्या सह यथागता ।।**
**कथयैतद्वचस्तस्मै यदानीतं नयस्व तत् ।**
**किमर्थं मानिनी चित्त चोरयन्नाभिगच्छति ।। १५ ।।**

वह मानिनी के चित्त को हरण करके किस निमित नहीं आये है, तुम शीघ्र ही इस सखी के साथ वहाँ जाकर उनसे मेरा यह समस्त वृतान्त कहना और जो द्रव्य लाई हो वह सब लौटा ले जाओ।

*नारद उवाच*

**इत्याकर्ण्य सखी वाक्यं राधिकायास्त्वरान्विता ।।**
**उवाच दत्त्वा हरये ताम्बूलं पुष्पचन्दनम् ।।१६ ।।**

नारद जी बोले कि सखी, राधिका के इन वचनों को सुनकर शीघ्रता के साथ श्री कृष्ण को ताम्बूल, पुष्प तथा चन्दन आदि वस्तुयें देकर कहने लगी।

**राधयोक्तं मम प्राणप्रियोऽस्त्यन्याप्रियोऽभवत् ।।**
**मामाश्रित्य निकुञ्जेऽस्मिन्स्थितो राधां विहाय हि ।।१७ ।।**

श्री राधिका जी ने इस प्रकार से कहा है, कि तुम मेरे प्राण प्रिय होकर पराई स्त्रियों के प्रेम में मग्न हो रहे हो, तुम मेरा आश्रय लेकर राधा को छोड़कर इस कुञ्ज में निवास करते हो।

**इत्युक्ता राधिका कान्ता बहुधा तोषिता मया॥**
**न जहाति निजं मानं त्वयि किञ्चित्कृतागसि ॥१८॥**

इस प्रकार कही गयी प्रिया राधिका जी को बहुधा मैंने सन्तुष्ट किया तथापि उन्होंने कुछ अपराध करने वाले आपके प्रति मान को नहीं छोड़ा है।

**न तया सदृशी कान्ता राधिका याऽतिविश्रुता॥**
**तां त्यक्त्वा त्वन्यसंस्नेहस्तवैव गुणहीनता ॥१९॥**

कोई स्त्री भी राधा के समान मनोहारिणी नहीं है जो अति विश्रुत है। आप यदि उनको त्याग कर और किसी से स्नेह करते हैं तो यह आपकी गुणहीनता ही है।

**सत्यं ब्रूहि निजागस्त्वं यतोऽसि श्रेष्ठनायकः॥**
**न च सामान्यगुणवांस्त्वमुत सर्व्वसम्मतः ॥२०॥**

आप सत्य-सत्य कहिए कि आपने क्या अपराध किया है, क्योंकि तुम श्रेष्ठ नायक हो। तुम सामान्य गुण वाले नहीं हो तथा तुम सर्वसम्मत हो।

**सत्कान्तालक्षणं याति प्रिया प्राणसखी सती॥**
**कथं तव निकुञ्जेऽस्मिन्प्रवेशस्तां विनाऽभवत् ॥२१॥**

सत्कान्ता में जिन सब लक्षणों का होना आवश्यक हैं श्री राधिका जी में भी उनमें से किसी अंश का अभाव दृष्टि नहीं आता, विशेष कर वह आपकी परम प्रीतिमयी प्राणों की सखी हैं, अतः उनको त्याग करके आप किस प्रकार से इस कुञ्ज में प्रविष्ट हुए हैं।

**नापराध्यसि चेत्सार्द्धं मया नागम्यते कथम्॥**
**विचार्य्यते मया प्रीतिर्ग्लानिस्तस्या मनस्यपि ॥२२॥**

आपका यदि कोई अपराध नहीं है तो मेरे साथ राधा के पास क्यों नहीं चलते। मेरे विचार में तो यह आता है कि उसके चित्त में आपकी ओर से किसी प्रकार की ग्लानि है।

**न ग्लानेरौषधं किञ्चित्प्रतीतिर्नोपजायते॥**
**तस्मात्किमत्र कर्त्तव्यं वदस्वाद्य मनोरम ॥२३॥**

उनकी इस ग्लानि को दूर करने के लिए कोई औषधि नहीं है और यदि कोई औषधी है उसको भी मैं नहीं जानती, इस कारण हे मनोरम! इस विषय में कर्त्तव्य क्या है? वह मुझे बतलाइये।

*नारद उवाच*

**कास्त्यत्र मेऽपरा पत्नी प्रियाऽन्यैतां विना प्रियाम्॥**
**त्वमेव पश्य कुञ्जेऽस्मिन्वर्त्तसे न्यायसंयुता ॥२४॥**

नारद जी बोले कि श्री कृष्ण जी इन वचनों को सुनकर इस प्रकार कहने लगे कि परम प्रीति की आधार श्री राधिका के बिना और न्याय सङ्गत कोई भी मेरी प्रिया नहीं है; तुम भी देख लो कि मैं अकेला ही इस कुञ्ज में निवास करता हूँ।

**सापि त्वयैवानीतात्र तवात्राविदितं क्वचित्॥**
**इयं सकौतुका कन्या नित्यमुत्कण्ठिता सती ॥२५॥**

इस कन्या को यहाँ तुम्हीं लायी हो अतः तुम्हें कुछ अविदित नहीं हुआ है। यह कन्या स्वयं ही उत्कण्ठित और कौतूहलान्वित होकर।

**निष्कामा तव सङ्गेन विचरन्ती वने स्फुटम्॥**
**इदमावेद्यतामस्यै पुनर्गत्वा वरानने ॥२६॥**

इस वन में तुम्हारे साथ विचरण करती है, किसी के प्रति भी इसकी कामना नहीं है, हे वरानने! तुम फिर जाकर राधिका जी को यह सब बतला दो।

**ममातिपरगा कान्ता त्वत्तो नास्तीह काचन॥**
**कन्या त्वत्सदृशी कान्ता वर्त्तते भुवनत्रये ॥२७॥**

कि, तुम्हारे बिना और कोई स्त्री भी हमारी मनोहारिणी और प्रीतिकारिणी नहीं है, मैं एकमात्र तुममें ही आसक्त हूँ। यहाँ तक कि इस त्रैलोक्य में तुम्हारे समान और कोई स्त्री नहीं है।

**न ते वयः परिणतिर्न रूपबलसङ्क्षयः॥**
**मयीह सङ्गता कान्ता कलवाक्यपरायणा ॥२८॥**

तुम्हारा यौवन भी इस समय परिणत नहीं हुआ है, और तुम रूप तथा बल में भी किसी प्रकार से क्षीण नहीं हो, सुन्दर वाक्यों में परायण मुझमें आसक्त रहने वाली तुम्ही कान्ता हो।

**यद्यहं क्षणमात्रं हि त्वत्तोऽनुविरतोऽभवम्॥**

**न मे प्राणाः प्रहृष्यन्ति प्रिये प्रागसमाधृताः ॥२९॥**

हे प्रिये ! यदि क्षण भर मैं तुमसे विरत हो जाऊँ तो ये मेरे प्राण पहले ही न संभलते हुए प्रसन्न नहीं रह सकते हैं।

**त्वदायत्तं मनोमेऽस्ति त्वदायत्तोऽस्मि सर्व्वदा॥**

**अधीनोऽहं मीनवन्न त्वां च त्यक्तुमिहोत्सहे ॥३०॥**

अधिक क्या कहूँ मेरा मन तुममें ही प्रविष्ट है और मछली का जीवन जिस प्रकार जल से है मैं भी उसी प्रकार से तुम्हारे अधीन हूँ। अतः तुम्हें छोड़ नहीं सकता हूँ।

**यावद्वारिणि वर्त्तेत तावज्जलचरो भवेत्॥**

**ततश्चेद्भिन्नतामेति न जीवति कथञ्चन ॥३१॥**

जलचर तब तक जल में रहते हैं जब तक वह जल रहता है, अगर जल से वह अलग हो जाये तो फिर किसी प्रकार से भी प्राण धारण करनें को समर्थ नहीं होते।

**तथा मे जीवितं राधा बल्लवी प्राणवल्लभा॥**

**किमहं वर्णये तस्या गुणान्गुणमहोदधेः ॥३२॥**

मेरा प्राण भी उसी प्रकार तुम्हारे अधीन है, हे गोप कुमारी प्राणवल्लभे ! राधिके ! समस्त गुणों की महोदधि उस राधा के गुणों का वर्णन मैं क्या करूँ।

**सैवात्र जीवनं सत्यमुरगस्य मणिर्यथा॥**

**न मे कैतववृत्तिश्च एकरूपोऽस्मि सर्व्वतः ॥३३॥**

सर्प की मणि के समान वही राधा मेरा जीवन है यह सत्य हैं मुझमें किसी प्रकार छल कपट की वृत्ति नहीं है। मैं राधा के प्रति सर्वभाव से एक ही रूप हूँ।

**अनेकरूपश्चैवास्मि मत्तो भिन्नं न किञ्चन॥**

**सर्व्वेश्वरोऽहमत्रैव राधिकाप्राणवल्लभः ॥३४॥**

मुझसे भिन्न कुछ नहीं है मैं अनेक रूपों वाला हूँ। मैं यहीं सर्वेश्वर तथा राधा का प्राण बल्लभ हूँ।

**सन्ति रूपाण्यनेकानि दृश्ये दृष्टोऽस्मि चन्द्रवत्॥**

**अत्रैवाहं पुमानेकः केवलो गम्य ईश्वरः ॥३५॥**

यद्यपि संसार में मेरेअनेक रूप हैं परन्तु चन्द्रमा जिस प्रकार एक है, उसी प्रकार से मैं भी सबों की दृष्टि में ईश्वर स्वरूप एकमात्र पुरुष रूप से विराजमान और दृष्ट हूँ।

**स्त्रीत्वे तु सा तु राधैव तस्याः सख्यश्चरन्ति हि॥**

**न कस्याश्चिदहं प्रेष्ठो न तु चान्यस्य प्रेयसी ॥३६॥**

स्त्री के रूप में वह राधा मेरी ही है, उसकी बहुत सी सखियाँ विचरण करती हैं, मैं किसी का प्रिय नहीं हूँ और वह भी किसी की प्रेयसी नहीं है।

**आवयोरिह सर्व्वत्र क्रीडा नित्यं विराजते॥**

**कस्मान्मानो विधेयोऽत्र यतोऽहं त्वितराप्रियः ॥३७॥**

संसार में सर्वत्र हम दोनों की नित्य लीला विराजित है, अतः तुमको मान करना किसी प्रकार से भी योग्य नहीं है क्योंकि मैं दूसरी किसी का प्रिय नहीं हूँ।

**आगच्छ कुञ्जभवनं समाहूय सखी जनान्॥**

**अहं चेन्नाभिगच्छामि तदा मानाधिकं प्रिये ॥३८॥**

अतः अपनी सखियों को बुलाकर कुञ्ज भवन में आओ तुम्हारे बुलाने से यदि मैं न जाऊँ तो इससे अधिक मेरे ऊपर हे प्रिये ! फिर मान करना।

**एवमेव पुनर्गत्वा सखि सर्व्वं निवेदय॥**

**अहमेव ततो गत्वा तोषयिष्ये सुयुक्तिभिः ॥३९॥**

हे सखि! इस प्रकार पुनः जाकर सब कुछ निवेदित करो। इसके बाद मैं जाकर उचित युक्तियों से उन्हें सन्तुष्ट करुँगा।

**इत्याश्रुत्य सखी कृष्ण मुखाद्वचनमुत्तमम्।**

**पुनरागत्य तां राधामुवाचेदं सुयत्नतः॥ ४०॥**

कृष्ण के मुख से उत्तम वचन सुनकर सखी राधा के पास जाकर यत्नपूर्वक बोली।

**कान्ते कान्तप्रियासि त्वं वृथा मानरतिस्तव॥**

**नायको गुणराशौ च श्रीकृष्णे प्रेमसागरे ॥४१॥**

हे कान्ते ! प्रियतम तुमसे सर्वथा ही प्रीति करते हैं, तुमने इस समय वृथा मान किया है, श्री कृष्ण साक्षात् प्रेम के समुद्र और मूर्तिमान् गुणों की खान हैं, उनके प्रति मान करना कदापि उचित नहीं है।

**राधे राधेति राधेति परं मन्त्रमुपासते ॥**
**निविष्टः कुञ्जभवने एकाकी तव वल्लभः ॥४२॥**

वह राधा "राधा, राधा, राधा, 'इस परममन्त्र की उपासना करते हैं, तुम्हारे वह प्राणवल्लभ तुमको त्याग कर अकेले कुञ्ज में ही बैठे हैं।

**काञ्चिन्न चिन्तयत्यन्यां वाचा न वदति स्फुटम् ॥**
**न तत्र कुरुते कर्म त्ववशः केवलं परम् ॥ ४३॥**

और वह मन में भी अन्य स्त्री की चिन्ता तथा वचन द्वारा किसी प्रकार स्फुट नहीं बोलते हैं, वह एकमात्र तुम्हारे ही वशीभूत हैं। वे और दूसरा कार्य करते ही नहीं हैं।

**त्वदर्थे कुरुते शय्यामद्भुतां कुसुमोत्तराम् ॥**
**ईशानामीश्वरः कान्ते यद्वशे भुवनत्रयम् ॥ ४४॥**

उन्होंने अनन्यकर्मा होकर तुम्हारे लिए फूलों की विचित्र शय्या बनाई है, हे सुन्दरी ! जो ईश्वरों के भी ईश्वर हैं, त्रिलोकी जिनके वश में है।

**लोकपाला विरिञ्चाद्या यस्यादेशानुवर्त्तिनः ॥**
**स एव परमः साक्षादधीनस्ते वशीकृतः ॥ ४५॥**

ब्रह्मा आदि लोकपाल जिनकी आज्ञा के अनुसार कार्य करते हैं वही साक्षात् परम पुरुष ईश्वररूपधारी कृष्ण तुम्हारे अधीन और वशीभूत हुए हैं।

**न जहाति तवासङ्गं क्षणमात्रं कदाचन ॥**
**तवार्थे कुसुमानां हि सञ्चयं कर्त्तुमुद्यतः ॥४६॥**

वह कभी एक क्षण भर भी तुमसे अलग होना नहीं चाहते। वह तुम्हारे लिए फूलों को चुनने के लिए उद्यत हुए हैं।

**कुञ्जान्तरगतः कृष्णस्तस्मिन्मानो विराजते ॥**
**कुसुमानि सुगन्धीनि सञ्चितानि वरानने ॥४७॥**

श्रीकृष्ण तुम्हारे ही उद्देश्य से कुञ्ज में गये हैं, उनके ऊपर मान करना शोभा देता है, हे वरानने ! उन्होंने सुगन्धित फूलों को तुम्हारे लिए सञ्चित किया है।

**तत्पार्श्वे चलनं श्रेयः तव मानो न शोभनः ॥**
**उभयोः सङ्गमो राधे तस्मात्तु परमं सुखम् ॥४८॥**

उनके निकट तुम्हारा चलना सर्वथा उत्तम है अतः तुम्हारा मान करना शोभित नहीं होता। हे राधे तुम दोनों के सङ्गम से ही परम सुख होता है।

**अपास्य मानमधुना व्रज त्वं प्रियसन्निधौ ॥**
**अथवाहूय तं चैव कान्तं प्राणप्रियं तथा ॥४९॥**

इसलिए तुम मान को त्याग कर अब प्रिय की सन्निधि में जाओ अथवा उन प्राण-प्रिय कान्त को स्वयं बुलवाओ।

**तेनातिप्रेमसम्भारैः प्रेषितास्मि तवान्तिकम् ॥**
**आनेतुं त्वां वरारोहे देहि नाम प्रियं प्रिये ॥ ५० ॥**

हे वरारोहे ! उन तुम्हारे प्राण प्यारे कान्त ने मुझको अत्यन्त प्रीति सम्भार के साथ तुमको ले जाने हेतु मुझे भेजा है। प्रियतम मैं अपने नाम को प्रिय बना लो।

**राधे दग्धा रूपवती त्यज मानं सुराङ्गना ॥**
**रसाकृष्टः स वै कृष्णस्तव त्रैलोक्यसुन्दरः ॥५१॥**
**वृन्दावने निकुञ्जेषु प्रेमप्रसरसंयुतः ॥**
**विचरत्यनिशं कृष्णो नानारसविचक्षणः ॥५२॥**

हे राधे ! मान को त्याग दो। रूपवती अप्सरा भी दग्ध हो गयी थी। वह त्रैलोक्य सुन्दर कृष्ण तुम्हारे प्रेम रस से आकृष्ट है। वह अनेक प्रकार के रसों से युक्त और अपार प्रेम सम्पन्न है, वह अब तुम्हारें लिए वृन्दावन के कुञ्ज में निरन्तर विचरण करते हैं।

**श्रुत्वैतद्वचनं राधा सर्व्वेषां सुमनोरमम् ॥**
**तामुवाच सखीं राधा सत्यं कान्तः स मे प्रियः ॥५३॥**

नन्दिनी के ऐसे मनोरम वचनों को सुनकर राधा जी सखी से बोलीं कि निश्चय ही प्रियतम मुझे अत्यन्त प्रिय हैं।

**नष्टो ममात्र सन्देहो गतो मानो विनाशताम् ॥**
**सा स्त्री नित्यं भवेत्कान्ता भर्त्तुर्भावानुसारिणी ॥५४॥**

अब मेरा सन्देह निवारण हुआ, और उसी के साथ मान भी दूर हो गया। जो स्त्री अपने स्वामी की भावानुसारिणी है वह सर्वदा उसकी कान्ता होती है।

**यास्याम्यहं कृष्णमयि भाति सक्तं जगत्प्रियम् ॥**
**तथापि मानं यत्कुर्वे श्रोतुं तद्वचनं रहः ॥५५॥**

जगत्प्रिय, मुझमें आसक्त कृष्ण के पास मैं जाऊँगी। मैं केवल उनके एकान्त वचनों को सुनने के लिए ही मान करती हूँ।

**गत्वा त्वयापि तत्पार्श्वे वक्तव्यं च तव प्रिया ॥**
**मानं त्यजति गोविन्द त्वदासक्ता च सा प्रभो ॥५६॥**

अब तुम उनके निकट जाकर कहो कि वह तुम्हारी प्रिया तुमसे अनुराग करती है और हे प्रभो ! गोविन्द ! तुम्हारी प्रीति के वशीभूत होकर मान का परित्याग करती है।

**नायं कामिप्रियः कृष्णः स्वामी सर्व्वेश्वरो महान् ॥**
**स्त्रष्टा पालयिता हन्ता कोटिब्रह्माण्डनायकः ॥५७॥**

कोटि ब्रह्माण्ड नायक, स्त्रष्टा, पालयिता, संहारकर्त्ता, सर्वेश्वर, स्वामी, महान् श्रीकृष्ण कामियों को प्रिय नहीं हैं।

**तवासौ प्रियकृद्राधाऽनुरागपरमोत्सवा ॥**
**सा त्वां भृशं चिन्तयति त्वत्पार्श्वं गन्तुमिच्छति ॥५८॥**

अब तुम उनके निकट जाकर कहो कि तुम्हारी प्रिया तुम्हारी अनुरागिणी है, एकमात्र तुम्हारी ही चिन्ता करती है और तुम्हारे ही निकट जाने के लिए सर्वदा ही उत्कण्ठित रहती है।

**मानं त्यक्त्वा मद्वचनाल्लाघवं सा कथं व्रजेत् ॥**
**विनाहूता गच्छति चेल्लघुता भवति ध्रुवम् ॥५९॥**

मेरे वचन से मान त्याग कर वह लाघव को क्यों प्राप्त हो यदि बिना बुलाये वह जाती है तो निश्चित रूपेण लघुता होगी।

**तस्याः सखीसमाजे तु जायते चोपहासना ॥**
**तस्या अपि हि माधुर्य्यं न भवेत्प्रियसङ्गमे ॥६०॥**

सखियों के बीच में उसकी हँसी होगी और इसके प्रिय का मिलन होने पर भी मन में माधुर्य नहीं होगा।

**सम्मुखे नानुनीतासि वृथा मानं करोषि च॥**
**विना सखि प्रियेणालं त्वं वै गुणगणालया ॥६१॥**

हे सखि! तू उनके सन्मुख नहीं चलती वृथा मान करती है और गुणगणों से सम्पन्न तुम प्रिय के बिना क्या पर्याप्त हो? अर्थात् नहीं।

*नारद उवाच*

**श्रुत्वेत्थं राधिकावाचः नन्दिनी कन्यया सह॥**
**ययौ श्रीकृष्णपार्श्वं सा तमुवाच प्रियं वचः ॥६२॥**

नारद जी बोले कि नन्दिनी श्री राधा जी की यह बात सुनकर उस कन्या के साथ श्री कृष्ण के निकट जाकर प्रिय वचन कहने लगी।

*नन्दिन्युवाच*

**अनुनेतुं गता राधां न मानं त्यजति प्रिया॥**
**उक्ता मया सा बहुशो न साऽऽयाति कथञ्चन ॥ ६३॥**

नन्दिनी बोली कि, मैं राधा से अनुनय करने के लिए गयी थी परन्तु राधा प्रिया ने मान को नहीं छोड़ा! मैंने अनेक प्रकार से समझाया तथापि वह नहीं आयी।

**त्वमेव तत्र गच्छस्व मया सार्द्धं सुरेश्वर॥**
**अनुनीयाङ्कमारोप्य विलासस्व तया सह ॥६४॥**

हे सुरेश्वर!आप ही स्वयं मेरे साथ वहाँ चलें और राधा से अनुनय करके उनको अपनी गोद में बिठाकर उनके साथ विलास कीजिए।

**मम वाक्यं न शुश्राव हास्येन मधुसूदन॥**
**न मानं ते प्रिया त्यक्त्वा इहायास्यति माधव ॥६५॥**

हे मधुसूदन! वह मेरे वचनों को हास्य करके नहीं सुनती, हे माधव! तुम्हारी प्रिया राधा कभी मेरे कहने से मान को छोड़कर इस स्थान पर नहीं आयेगी।

**अतो गत्वा तत्समीपं निकुञ्जभवनं हरे॥**
**नानाविनोदैः क्रीडित्वा द्वयोर्देहि महासुखम् ॥६६॥**

अतः हे हरे ! आप ही उस कुञ्ज भवन में जाकर विविध प्रकार की क्रीड़ा करके दोनों को महान् सुख प्रदान कीजिए।

**समयोऽयं विभो प्रेष्ठः प्रेयस्यनुनये शुभः॥**
**प्रविश्य कुञ्जभवनं कुरुष्व स्मरसङ्गमम् ॥६७॥**

हे विभो !प्रमिका के मान को दूर करने के लिए यह समय बहुत उत्तम (प्रेष्ठ) है इस कारण कुञ्ज भवन में जाकर काम समागम कीजिए।

**क्रीडां हि युवयोर्दृष्ट्वा मनोऽस्माकं प्रसीदति॥**
**इयञ्च कन्या युवयोर्विलासं द्रष्टुमागता ॥६८॥**

आप दोनों के विहार को देखकर हमारा मन प्रसन्न होता है और यह कन्या भी आपकी विलास कला को देखने के निमित्त आयी है।

**एतावतालं मानेन व्रज कृष्ण प्रियान्तिकम्॥**
**भिन्नौ दृष्ट्वा युवां प्राणा मम यान्ति विनाशताम् ॥६९॥**

इतना मान ही पर्याप्त है, हे कृष्ण ! प्रिया के निकट चलिए, आपको विरह से पृथक् देखकर हमारे प्राण पलायन करना चाहते हैं।

**नित्यलीलां च युवयोरिहाहं कन्यया सह॥**
**यथा पश्यामि भगवञ्चिरं मा भवतु प्रभो ॥७०॥**

हे प्रभो ! यहाँ मैं कन्या के साथ तुम दोनों की नित्य लीला जिस प्रकार देखती रहूँ, हे भगवन् ! ऐसा मुझे कर दें।

*नारद उवाच*

**श्रुत्वेत्थं नन्दिनीवाक्यमुवाच भगवान्स ताम्॥**
**उत्कण्ठितोऽहञ्च भृशं यामि तत्र त्वया सह ॥७१॥**

नारद जी बोले कि नन्दिनी के ऐसे वचन सुनकर भगवान् ने उससे कहा कि मैं राधा के मान को दूर करने के लिए ही अत्यन्त उत्कण्ठित हो रहा हूँ, मैं इस समय तुम्हारे साथ चलता हूँ।

*श्रीकृष्ण उवाच*

**धन्यासि नन्दिनी नित्यं नातुरा त्वं कदाभवः॥**
**इयञ्च कन्या मे द्रष्टुं रहस्यमभिकाङ्क्षति ॥७२॥**

हे नन्दिनी ! तुम धन्य हो क्यों कि तुम किसी कारण से भी व्याकुल नहीं होती, यह कन्या मेरे रहस्य को देखने के लिए अधिक अभिलाषवती है।

**तस्मादस्यै सुखं देयं विनोदं मम पश्यतु ॥**
**गच्छानया सह ब्रूहि राधामागच्छति प्रियः ॥७३ ॥**

इसको सुखी करना उचित है, यह मेरे विनोद को देखे, तुम इस कन्या के साथ जाकर श्री राधा जी से कहो कि तुम्हारे प्रियतम आ रहे हैं।

**अनन्तरं हि भवती न मानं कर्त्तुमर्हति ॥**
**मानोऽनिशं कृतः कान्ते रसभङ्गकरो ध्रुवम् ॥७४ ॥**

इसके बाद आपको मान करना उचित नहीं होगा, हे कान्ते! सर्वदा मान करने से निश्चय ही रस में भङ्ग होता है।

*नन्दिन्युवाच*

**गच्छामि राधिकापार्श्वमागन्तव्यं त्वया लघु ॥**
**कर्त्तव्या कन्यकाकाङ्क्षा अकर्त्तव्यो ह्यनादरः ॥ ७५ ॥**

नन्दिनी बोली कि मैं राधा जी के पास जाती हूँ, आप शीघ्र ही आइये और इस कन्या की अभिलाषा को पूर्ण करना अवश्य कर्त्तव्य है, न करने से अनादर होगा।

**पश्ये रहस्यं युवयोर्यतोऽहं सहचारिणी ॥**
**सहैव गमने राधाऽयाचतेति ममाग्रहात् ॥ ७६ ॥**

मैं आपकी सहचारिणी हूँ इस कारण आपके रहस्य को देखती हूँ। मेरे आग्रह से राधा ने साथ ही गमन की याचना की है।

**ततोऽनया मया सार्द्धं तत्र वै गच्छ मा चिरम् ॥**
**एकाकिनस्ते गमनमनौचित्यकरं परम् ॥ ७७ ॥**

इस कारण आप मेरे और इस कन्या के साथ राधा के पास शीघ्र चलिए आपका वहाँ अकेले जाना किसी प्रकार भी उचित नहीं है।

*नारद उवाच*

**इत्युदीरितमाकर्ण्य प्रस्थितः स तया सह ॥**
**गतो राधासकाशं स मानिनी मानमत्यजत् ॥७८ ॥**

नारद जी बोले, कि नन्दिनी के ऐसे वचन सुनकर भगवान् श्री कृष्ण उसके साथ-साथ राधा के स्थान को प्रस्थित हुए और प्रिया के समीप पहुँचे। मानिनी राधाजी ने उसी समय मान का त्याग कर दिया।

**नानाविनोदलीलाभिश्चिक्रीडे सा वृषार्कजा ।।**

**आदृतो भगवान्कृष्णस्तयाऽभिमतया सह ।।७९ ।।**

उस वृषभानु पुत्री राधा ने कृष्ण के साथ अनेक विनोदमयी लीलाओं से क्रीडा की। उस अभीष्ट सखी तथा राधा के द्वारा भगवान् कृष्ण परम आदृत हुए।

**कृत्वा प्रणामं बहुशस्तदोवाच तु कन्यका ।।**

**दृष्ट्वाद्भुतं रहस्यं सा परं विस्मयमागता ।।८० ।।**

कन्या उनके इस परम अद्भुत रहस्य को देखकर अत्यन्त आश्चर्य को प्राप्त हुई बारम्बार प्रणाम कर हाथ जोड़कर इस प्रकार से कहने लगी।

**धन्या प्रिया ते श्रीकृष्ण यया त्वं रमसेऽनिशम् ।।**

**कृताञ्जलिर्विषयवाग्हृष्टा तु परमाद्भुतम् ।।८१ ।।**

हे कृष्ण! आपकी प्यारी श्री राधा जी ही धन्य है, जिनके साथ आप आनन्द में मग्न हो हाथ जोड़कर विषय वाक् से हृष्ट सर्वदा विहार करते हैं।

**त्वमेव प्राणनाथो मे त्यक्तुं शक्नाम्यहं कथम् ।।**

**यथाविनोदं लीलान्ते पश्येयं भुवनोत्तमम् ।।८२ ।।**

आप ही मेरे प्राणनाथ हैं, मैं आपको किस प्रकार से त्याग सकती हूँ अब ऐसा अनुग्रह करें जिससे लीला के अनन्तर विनोदपूर्वक भुवनोत्तम धाम के दर्शन प्राप्त हो।

**निकुञ्जे वनमध्ये च तत्र तत्र स्थिता ह्यहम् ।।**

**यद्द्रष्टुं मुनयो नित्यं तपन्ति परमं तपः ।।८३ ।।**

मैं कुञ्जवन में, अथवा जहाँ तहाँ रहकर आपकी लीला के आनन्द को सर्वथा देख सकूँ ऐसा उपाय आप कीजिए। ऋषि भी आपके इस रहस्य को देखने के लिए अनेक प्रकार से नित्य तप करते हैं।

**अधुनापि न ते द्रष्टुं शक्ता हि बहुजन्मभिः ।।**

**दृष्टं परं कौतुकं मे तव नाथ प्रसादतः ।।८४ ।।**

वे आज भी बहुत जन्मों के द्वारा आपको देखने में समर्थ नहीं हैं। हे नाथ !आपके प्रसाद से परम कौतुक के दर्शन मुझे हुए हैं।

**धन्याहं ते कृपा जाता यन्ममोपरि माधव ।।**

**पूर्व्वजन्मार्जितं पापं समूलमधुना हृतम् ।।८५ ।।**

मैं धन्य हूँ जो आप की कृपा मेरे ऊपर हो गयी है। अब मेरे पूर्व जन्म के किए हुए समस्त पाप नष्ट हो गये।

**यद्रहस्यमद्भुतन्ते भवत्प्रणयगोचरम् ।।**

**याचे वरं वरं त्वतः किमन्यं पुण्यमुत्तमम् ।।८६ ।।**

मुझे आपके प्रणयस्वरूप अद्भुत रहस्य का दर्शन हुआ, इसके समान आपके निकट और किस पुण्यस्वरूप उत्तम वर की प्रार्थना करूँ।

**तेषां कालो वृथा याति त्वां भजन्ति न ये विभो ।।**

**संस्मरन्ति महान्तोऽपि प्रेरिता निजकर्म्मभिः ।।८७ ।।**

हे विभो ! जो अपने कर्मों से प्रेरित होकर आपका भजन अथवा स्मरण नहीं करते हैं, वे महान् होने पर भी अपने समय को वृथा व्यतीत करते हैं।

**कृष्ण कान्त करुणाकर कर्म्मसमूहकृन्तन ।।**

**श्रीधर विष्णो विश्वभावन परमेश्वर परात्मन् ।।८८ ।।**

हे कृष्ण ! हे कान्त हे करुणाकर ! हे कर्मसमूह के काटने वाले ! हे श्रीधर ! हे विष्णु ! हे विश्वभावन ! हे परमेश्वर ! हे परमात्मन् !

**मे जनुर्भवतु गुल्मलतासु प्राणनाथ इदमेव समीहे ।।**

**किं तपः किमिह धर्म्मसमूहः किं कृतं हि धनदानमनन्तम् ।।८९ ।।**

हे प्राणनाथ ! अब मैं यही प्रार्थना करती हूँ कि मेरा इन्हीं गुल्म लताओं में जन्म हो और मैं नहीं जानती कि तप क्या है ? क्या धर्म का अनुष्ठान है, तथा मैंने अनन्त धन दान क्या किया है ?

**किं परोपकृतिरन्यजनौ मे येन दृष्टमिदमेव रहस्यम् ।।**

**हे विभो चिरमिह भ्रमिता गाम्पर्यटन्सकललोकमशेषम् ।।९०**

पूर्व जन्म में कौन से दूसरों के उपकार हैं, अथवा कौन से सुकृत का विधान किया था जिस कारण से आपके इस रहस्य का दर्शन प्राप्त हुआ ? हे विभो ! मैंने बहुत काल से पृथ्वी पर तथा सभी लोकों में भ्रमित हो कर पर्यटन किया।

एतदेव सुधासिन्धुमनन्तं नावलोकितमहो क्वचिदेव ॥
नित्यमेव नियता तव लीला राधिका रसगतस्य न दृष्टा ॥
यत्क्षणं भवति ते विपिनेऽस्मिन्कोटिकल्पसुखमेति न तुल्यम् ॥ ९१ ॥

परन्तु किसी स्थान में भी इस प्रकार के अनन्त सुख रूपी सागर को नहीं देखा, सर्वदा प्यारी राधिका जी के सहित आपकी रासलीला को इस प्रकार नहीं देखा। आपके साथ इस वन में क्षणभर रहने से मेरे करोड़ कल्पों के सुख उसके समान नहीं है।

याचे विष्णो देहि मे जन्म यत्र स्थित्वा लीलां नित्यमेवानुदृश्ये ॥
वृन्दारण्ये कान्तभूमिप्रदेशे यं दृष्ट्वाहं यामि मोदं त्वपारम् ॥९२ ॥

हे विष्णो ! मैं आप से याचना करती हूँ कि मुझे इस प्रकार से जन्म दीजिए जहाँ स्थित रहकर मैं आपकी इस वृन्दावन लीला को देखकर अपार आनन्द को पा सकूँ।

*श्रीकन्योवाच*

दृष्टं रहस्यमेतन्मे भगवन्नद्भुतं परम् ॥
रासक्रीडास्थलं चापि व्रजलीलां प्रदर्शय ॥९३ ॥

कन्या बोली कि हे भगवन् ! आपकी इस अद्भुत लीला का रहस्य मैंने देखा अब मुझको ब्रज लीला तथा रासक्रीडास्थल को दिखाइये।

नित्याश्चेद्व्रजलीलास्ते मह्यं दर्शय नारद ॥
कन्यारूपेण ते विष्णो दर्शनाधिकृतं मम ॥९४ ॥

हे मनुष्य ज्ञान के दाता! विष्णु ! आपकी ब्रज में लीला यदि नित्य है, वही मुझको दिखाइये, क्योंकि इस कन्या रूप से उसे देखने का मुझे अधिकार है।

न वै दर्शनयोग्यत्वं कुर्य्यां किं वद मे प्रभो ॥९५ ॥

हे प्रभो ! मैं दर्शन योग्य नहीं हूँ तो क्या करना उचित है बतलाइये।

*किशोर उवाच*

श्रूयतां करणीयं यद्यथावत्कथयामि ते ॥
इतो मधुवने रम्या गङ्गा श्रीकृष्णसञ्ज्ञिता ॥९६ ॥

भगवान् बोले-कि सुनो मैं यथावत् कहता हूँ, इधर मधुवन में श्री कृष्ण नाम की परम मनोहारिणी गङ्गा जी बह रही हैं।

**तत्र स्नानेन पुंस्त्वं स्यात्कन्यारूपस्य तेऽनघ ॥**

**पुंस्त्वे जाते ततस्तुभ्यं दर्शयिष्ये व्रजोत्सवम् ॥९७॥**

हे अनघ! उसमें स्नान करके तुम कन्या रूपी शरीर को छोड़कर पुरुष रूप हो जाओगे, पुरुष स्वरूप के प्रकट होते ही मैं तुमको ब्रज की लीला दिखाऊंगा।

***नारद उवाच***

**इत्युक्ते तु समागम्य गङ्गां श्रीकृष्णसञ्ज्ञिताम् ॥**

**स्नात्वा पीत्वा पयस्तस्याः पुंस्त्वं प्राप्तस्तदैव हि ॥९८॥**

नारदजी बोले कि भगवान् के इस प्रकार कहने पर वह कन्या कृष्ण गङ्गा गई, और उसमें स्नान कर आचमन किया, उसी समय उसका स्वरूप पुरुष हो गया, और कन्या रूपी शरीर लुप्त हो गया।

**अपश्यमद्भुतं तत्र ह्यात्मानं पुंस्त्वमागतम् ॥**

**लब्ध्वा मनोरथान्सर्व्वान्व्रजं द्रष्टुमथाययौ ॥९९॥**

तब उसने अपने को अद्भुत पुरुष रूप में देखा तथा सम्पूर्ण मनोरथों को प्राप्त करके ब्रजभूमि को देखने के लिए आयी।

**नारदेन स्वरूपेण सानन्दः परमोत्सुकः ॥**

**तं सायन्तनवेलायां प्रविष्टो व्रजमण्डलम् ॥१००॥**

नारद स्वरूप से आनन्दित तथा परमोत्सुक होकर उसने सन्ध्या के समय व्रजमण्डल में प्रवेश किया।

**ददर्शाथ समायान्तं गोपैर्गोभिरधोक्षजम् ॥**

**वयस्यैरनुगायद्भिः कीर्तिं परमपावनीम् ॥१०१॥**

गोप तथा गायों से युक्त, मित्रों के द्वारा जिनकी परमपावनी कीर्त्ति गायी जा रही है ऐसे श्रीकृष्ण को आते हुए देखा।

**अथो व्रजाद्विनिःसृत्य गोप्यः सर्वा दिदृक्षवः ॥**

**मातरश्च यशोदाद्याः कृष्णरामौ सुतानपि ॥१०२॥**

इस के बाद समस्तगोपी और यशोदा इत्यादि मातायें अपने-अपने पुत्रों तथा बलराम कृष्ण को देखने की इच्छा वाली व्रज मण्डल से बाहर निकली।

**रामकृष्णौ च सर्व्वेशौ गोपवेषविभूषितौ ॥**

**चारयित्वा वने गाश्च व्रजमेभिश्च जग्मतुः ॥१०३॥**

सभी के स्वामी राम और कृष्ण गोपवेष से शोभायमान होकर वन में गौओं को चराकर इन्हीं के साथ व्रज को आने लगे।

**गौरश्यामौ नृणां श्रेष्ठौ सर्व्वविश्वेशवन्दितौ ॥**

**अनन्तलीलाभिरतौ गोपवेषधरावपि ॥१०४॥**

उनमें से एक का गौर वर्ण और दूसरे का श्याम वर्ण था, वह सभी विश्वेश्वरों (राजाओं) के द्वारा वन्दित थे। वे अनन्त लीला में लगे हुए तथा गोप का वेष धारण करने वाले हैं।

**नित्यं क्रीडति गोपीभिर्व्रजपत्नीभिरात्मवान् ॥**

**आलोक्य वनिताः सर्व्वाः प्रीताः श्रीकृष्णदर्शने ॥१०५॥**

आत्मवान् हरि व्रजाङ्गना गोपियों के सहित वहाँ नित्यलीला करते हैं, गोपों की स्त्रियाँ श्री कृष्ण को देखकर प्रसन्न हो जाती हैं।

**नीराजनविधिं कृत्वा व्रजं निन्युर्व्रजेश्वरम् ॥**

**व्रजेश्वरीगृहं रम्यं व्रजस्त्रीभिरथागमत् ॥१०६॥**

आरती करके उन व्रजेश्वर को व्रज में ले गयीं। इसके अनन्तर समस्त व्रज की स्त्रियों के साथ श्रीकृष्ण यशोदा जी के सुन्दर घर को गये।

**नारदोऽपि तदा प्राप व्रजेशसदनं महत् ॥**

**तं दृष्ट्वाऽऽयान्तमुत्थाय भगवान्प्रयताञ्जलिः ॥१०७॥**

उस समय देवर्षि नारद जी भी उन ब्रजेश के भवन में गये, उन्हें आता हुआ देखकर साञ्जलि भगवान् उठकर।

**उवाच वचनं चारु शुभायातं महामुने ॥**

**अद्य नो जन्मसाफल्यमद्य नः परमं तपः ॥१०८॥**

मधुर वचन कहने लगे कि, हे महामुने! आपका आगमन शुभ है। आज हमारा जन्म सफल हुआ है और आज हमारी परम तपस्या सफल हुई है।

**पूर्व्वपुण्यसमूहेन लब्धं वै दर्शनं तव॥**
**गोपराजगृहं धन्यं यन्निविष्टो महामुनिः ॥१०९॥**

उसी पूर्व पुण्य के फल से आपके दर्शन प्राप्त हुए हैं। आज गोपराज नन्द जी का घर भी धन्य हुआ, कि महामुनि यहाँ पर प्रविष्ट हुए हैं।

**धन्यं गृहं गृहस्थानां सर्व्वतीर्थकरं महत्॥**
**साधुभिर्यत्समायातं तव पादोरुपङ्कजम् ॥११०॥**

गृहस्थों का गृह धन्य है और उस गृह में समस्त तीर्थ विद्यमान रहते हैं। आपके पादोरुपङ्कज से युक्त तथा साधुओं के द्वारा समागत घर धन्य है।

**पितरस्तद्गृहं यान्ति प्रसन्नाः सर्व्वदेवताः॥**
**भवन्ति नियतंतत्र यत्र गच्छन्ति साधवः ॥१११॥**

जिस स्थान पर साधुगण जाते हैं, वहीं पितृपुरुष भी आते हैं और समस्त देवता भी परमप्रीति के साथ वहाँ सर्वदा निवास करते हैं।

**येषां पादोदकं तीर्थं तीर्थानामपि पावनम्॥**
**न पतति गृहे यत्र श्मशानमिव तद्गृहम्॥११२॥**

साधुओं का चरणोदक परम पवित्र है और समस्त तीर्थों में भी वह पावन है। वह जिसके घर में न गिरे वे घर श्मशान के समान है।

**न विष्णुकीर्त्तनं यत्र न च भागवता जनाः॥**
**तद्गृहं क्रोष्टुसदनं तद्गृहस्थजनिर्वृथा ॥११३॥**

जिस घर में भगवान् की कथा का पाठ न हो अथवा भगवद्भक्त जिस घर में नहीं जाये वह घर शृंगालों के घर के समान है उस गृहस्थ का जन्म सर्वथा निरर्थक है।

**धन्यं तत्सदनं श्रेष्ठं यत्रायान्ति भवद्विधाः॥**
**ये स्वपादोदकेनैव पावयन्ति गृहाङ्गणम् ॥११४॥**

आप सदृश महात्मा पुरुष जिस घर में जाते हैं वही गृह धन्य और श्रेष्ठ है, तथा जो अपने चरणोदक द्वारा घर के आँगन को पवित्र करते हैं।

**मुने लोके शुभं सर्व यतः पर्य्यटनं तव॥**
**विशेषेण पवित्रं मे गृहमागमनात्तव ॥११५॥**

हे मुनु! आपका पर्यटन लोक में सब प्रकार से शुभ है। अतः आपके शुभागमन से मेरा घर विशेष रूपेण परम पवित्र हो गया।

धन्यो नन्दः पिता मेऽद्य यशोदा जननी तथा ॥
धन्योऽहं पाविताः सर्व्वे मुनेरागमनेन ते ॥११६॥

मेरे परमपिता नन्द जी भी धन्य हो गये माता देवी यशोदा भी धन्य हुई और मैं भी धन्य हो गया।

तथापि पृच्छे त्वामद्य यदागमनकारणम् ॥
अहं तवाज्ञाकरणात्कृतार्थः स्यां न संशयः ॥११७॥

तथापि मैं पूछता हूँ कि आज आपका आना किस कारण से हुआ है। आपकी आज्ञा के पालन से मैं कृतार्थ हो जाऊँगा इसमें कुछ भी सन्देह नहीं।

यथा व्रजाधिराजोऽहं निवसाम्यत्र येन च ॥
तद्रहस्यं मया वाच्यमनुरागो यतस्त्वयि ॥११८॥

मैं जिस कारण से व्रज के अधीश्वर रूप से यहाँ पर निवास करता हूँ उसका रहस्य आपके निकट कहूँगा, जिस निमित्त आप में मेरा अनुराग है।

ब्रवीमि व्रजकेलिं स्वां विहारांश्च तथा बहून् ॥
जानन्ति नैतद्गोप्यं मे गोपा नन्दादयस्तथा ॥
गोप्यो रहस्यं बालाश्च ममानुग्रहणं विना ॥११९॥

मैं अपनी व्रज की लीला और अनेक प्रकार के विहारों को आप से कहूँगा नन्द इत्यादि गोप अथवा अन्य किसी को भी हमारा रहस्य विदित नहीं है, गोपी, बाल गोप अथवा गोप बालिकायें कोई भी मेरी कृपा के बिना इस समस्त रहस्य को नहीं जान सकते।

*नारद उवाच*

निशम्येत्थं भगवतो वचनं चाहमब्रुवम् ॥
आनन्दबाष्पकलया वाचा गद्गदया भृशम् ॥१२०॥

नारद जी बोले-कि, मैं भगवान् श्री कृष्ण के ऐसे वचनों को सुनकर आनन्दाश्रु से गद्गद कण्ठ होकर यह वचन बोला।

नन्दालये या लीलास्ते कृष्ण वृन्दावने गिरौ ॥
वदतां शृण्वतां गेहे रतिं छिन्दन्ति या नृणाम् ॥१२१॥

**बाल्यकौमारपौगण्डवयःसु च कृतास्त्वया ॥**
**अनेकविस्तरतया वद मे त्वं प्रियो यतः ॥१२२॥**

हे कृष्ण ! आपने नन्द जी के घर, अथवा वृन्दावन में या पर्वत पर बाल्य कौमार तथा प्रौढ अवस्था में जो-जो लीलाएँ की है उन्हें अतिविस्तृतया बतलाइये क्योंकि तुम मेरे प्रिय हो। ये लीलाएँ कहने तथा सुनने वालें मनुष्यों की गृह प्रीति नष्ट करती हैं।

**अजनस्य च ते जन्म नाशायोत्पथगामिनाम् ॥**
**क्षेमाय सर्व्वलोकस्य कर्त्तुं कर्म्माणि चैव हि ॥१२३॥**

उत्पथगामी जनों के नाश हेतु तथा सभी लोगों के कल्याणार्थ कर्म करने के लिए आप अजन्मा का जन्म हुआ है।

**यथैव सोऽब्धिर्मथितो लभ्यतेऽथ सुधा यथा ॥**
**संसेव्यमानो भक्तैस्त्वं ज्ञायसे नान्यथा क्वचित् ॥१२४॥**

समुद्र को मथने से जैसे अमृत की प्राप्ति होती है, उसी प्रकार भक्तों के द्वारा उपासित आपका स्वरूप ज्ञात हो जाता है, इसके विपरीत नहीं होता है।

**न ते कश्चिद्विकारोऽस्ति सृजतः रक्षतोऽपि वा ॥**
**लोकान्संहरतश्चैव निर्गुणोऽसि यतो विभो ॥१२५॥**

हे विभो ! लोकों की सृष्टि, रक्षा तथा संहार करते हुए आप को किसी प्रकार का विकार नहीं होता है क्योंकि आप निर्गुण हैं।

**सगुणत्वं रागयोगात्स्फटिकस्यैव ते स्मृतम् ॥**
**सा ज्योतिर्ज्योतिषां वारिप्रतिबिम्बो यथा भवेत् ॥१२६॥**

स्फटिक मणि की रक्तिमा के योग से जैसे उसमें राग होता है और वह सूर्य की ज्योति जैसे जल में प्रतिबिम्बित होती है उसी प्रकार आप का सगुणत्व है।

**आत्मा त्वं सर्व्वभूतेषु मध्यवर्ती क्वचित्स्थितः ॥**
**चित्तस्थैर्य्यं परं ज्ञानं संसारक्लेशकृन्तनम् ॥१२७॥**

आप ही सब प्राणियों में आत्मा और मध्यवर्ती रूप से विराजते हैं, आपका परम ज्ञान मन की स्थिरता के साथ संसार के क्लेश का नाशक है।

**यतः स्यात्तन्न श्रृणुयात्को मूढो यो नरेतरः ॥**

**तोष्येऽहं तत्परो भूत्वा कथयस्व कृपानिधे ॥१२८॥**

जिससे यह सब होता है उस प्रभु की कथाओं को कौन मूर्ख जो मनुष्येतर है श्रवण नहीं करेगा। हे कृपानिधि ! आप तत्पर होकर कहिये मैं प्रसन्न होऊँगा।

*श्रीकृष्ण उवाच*

**श्रृणु त्वं मुनिशार्दूल कथयाम्यात्मकौतुकम् ॥**

**यथा व्रजे विहारो मे भवेत्परमदुष्करः ॥१२९॥**

श्री कृष्ण बोले कि हे मुनिशार्दूल! तुम श्रवण करो मैं आत्मलीला का वर्णन करता हूँ, मैं जिस कारण व्रज में परमदुष्कर केलि के प्रसङ्ग से आया हूँ उसे भी कहता हूँ।

**नित्यो व्रजस्तथा नित्या य एते व्रजवासिनः ॥**

**गोपा गोप्यो वनं गावो विहराम्यत्र नित्यशः ॥१३०॥**

व्रज और व्रजवासी, यह सभी नित्य विराजमान है, किसी का भी विनाश नहीं है, गोप, गोपियाँ तथा वृन्दावन और गाएँ सभी नित्य हैं, मैं यहाँ नित्य ही विहार करता हूँ।

**न पश्यन्ति नरा मूढा मायया नष्टचक्षुषः ॥**

**कामक्रोधाभिभूताश्च विशेषेण कलौ युगे ॥१३१॥**

जो मूढ़चित्त माया से नष्ट दृष्टि वाले लोग हैं काम क्रोधाग्नि से अभि भूत हैं वे मनुष्य विशेष रूपेण कलियुग में मुझे नही देख पाते हैं।

**लोका विषयिणो येऽत्र श्रुतिस्मृतिविवर्जिताः ॥**

**धर्म्महीना ह्यनुदिनं मद्भक्तिरहिता भृशम् ॥१३२॥**

सभी लोग एकमात्र विषय की अभिलाषा में तत्पर श्रुति स्मृति से रहित, धर्महीन और दिन-दिन मेरी भक्ति से शून्य है।

**भक्तोऽहं ज्ञानवानस्मि मतोऽन्यः कोऽत्र विद्यते ॥**

**ब्राह्मणा वेदरहिताः शूद्राचाराः कुटुम्बिनः ॥१३३॥**

मैं ही भक्त और ज्ञानी स्वरूप हूँ मेरे अतिरिक्त और कोई नहीं है समस्त ब्राह्मण वेद से वर्जित शूद्र के समान आचार करने वाले कुटुम्ब के पालन करने में आसक्त हैं।

**लोलुपा भोजने पाने विद्याविरहिताः खलाः ।।**

**नानापथोपदेष्टारः कुकर्म्मनिरताः स्वयम् ।।१३४ ।।**

भोजन-पान में लोलुप विद्या से रहित अनेक प्रकार के मार्गों के उपदेशक स्वयं कुकर्म में रत तथा दुष्ट हैं।

**दूषका विष्णुभक्त सत्कर्म्मविमुखाः परम् ।।**

**लोकं चोपहसिष्यन्ति स्वच्छन्दा वकवृत्तयः ।।१३५ ।।**

सत्कर्मों से विमुख, विष्णु भक्तों की निन्दा करने वाले, स्वच्छन्द, बकवृत्ति वाले ऐसे लोग, लोक का भी उपहास करते हैं।

**स्वप्नोपमे नृलोकेऽस्मिन्विशेषेण कलौ युगे ।।**

**तेषामहं समुद्धर्त्ताऽवश्यं संसारसागरात् ।।१३६ ।।**

मैं स्वप्न के समान संसार में विशेषकर इस कलियुग में उन्हें अवश्य संसार रूपी समुद्र से उद्धार करूँगा।

**यदा पूर्वजनुः पुण्योपचयो भविता नृणाम् ।।**

**तदा मद्भक्तसंयोगस्ततो मद्भक्तिसम्भवः ।।१३७ ।।**

लोगों का जिस समय पूर्वजन्म पुण्य उपचित होगा तभी उनमें मेरी भक्ति का उदय होगा, और तभी मेरे भक्तों का संयोग होगा।

**व्रजेऽनुरागो राधायाः चरणानुस्मृतिः परम् ।।**

**गृणाम्यनुग्रहेणैव अवतारान्पृथग्विधान् ।।१३८ ।।**

उसी समय व्रज में प्रीति और श्री राधिका के चरणकमल चिन्तन करने का आविर्भाव होगा, मैं इस संसार के मनुष्यों के ऊपर अनुग्रह करने के लिए मनुष्यों में पृथक्-पृथक् रूप से अवतारों को ग्रहण करता हूँ।

**असुरा यवनांशेषु जाता लोकोपतापिनः ।।**

**अनीतिनिरताः सर्वे सङ्ग्रहे च प्रबुद्धयः ।।१३९ ।।**

सम्पूर्ण असुर यवनांश में जन्म लेकर त्रैलोक्य को सन्तापित करेंगे, सभी अनीति में रत तथा सङ्ग्रह की बुद्धि वाले होंगे।

**पलायमानास्तेषां हि प्रजाः स्युरतिपीडिताः ।।**

**प्रापुर्देशान्तरं चापि क्वचिन्न सुखिताऽभवन् ।।१४० ।।**

उनकी समस्त प्रजा पीड़ित होकर देश देशान्तरों में भाग जायेगी परन्तु कहीं भी सुख पाने में समर्थ न होगी।

**वैश्यास्तु शुद्धपाषण्डा नियतं कूटवृत्तयः ॥**
**शश्वत्क्रूरक्रियाश्चैव विषये सारबुद्धयः ॥१४१॥**

वैश्य नित्य पाखण्डी और कूटवृत्ति वाले, निरन्तर क्रूर कर्मों वाले तथा विषय में ही तात्त्विक बुद्धि वाले होंगे।

**तेषु विप्रेषु नष्टेषु कथं धर्म्मः प्रवर्त्तते ॥**
**कदाचित्केऽपि मद्भक्ता भविष्यन्ति कलौ युगे ॥१४२॥**

उन ब्राह्मणों के नष्ट होने पर धर्म का प्रवर्त्तन कैसे होगा? इस कलियुग में कभी ही कोई मेरे भक्त होंगे।

**शूद्रा विकर्म्मनिरता गोविप्राग्निपराङ्मुखाः ॥**
**तदा धरातिभारा हि कृत्वा गोरूपमद्भुतम् ॥१४३॥**

जब समस्त शूद्र कुकर्म में निरत और गो, ब्राह्मण तथा अग्नि से पराङ्मुख हो जाते हैं। तब पृथ्वी निश्चय अधिक बोझ से गौ स्वरुप को धारण करके।

**सम्प्राप्ता ब्रह्मसदनं स्वदुःखानि न्यवेदयत् ॥**
**प्रयामि पातालतलं भारं सोढुं नहि क्षमा ॥१४४॥**

ब्रह्माजी के निकट जाकर अपने दुःख को कहती है कि मैं अधिक भार को सहन न कर सकने से पाताल में प्रविष्ट हो जा रही हूँ।

**न शैलानां च सिन्धूनां लवणानां तथा नृणाम् ॥**
**नहि भारः सम्भवति यथा भारोऽह्यपालनात् ॥१४५॥**

उस प्रकार का भार मनुष्य, पर्वत और लवण सागर को धारण करने से भी नहीं होगा जैसा कि इस समय मुझे अपालन से हो रहा है।

**ब्राह्मणा वेदरहिताः सदाचारविवर्जिताः ॥**
**क्षत्रियास्त्यक्तराज्याश्च वैश्या वृत्तिप्रपीडिताः ॥१४६॥**

ब्राह्मण वेद से रहित और सदाचार से विवर्जित, क्षत्रिय त्यक्त राज्य वाले तथा वैश्य अपनी वृत्ति से पीड़ित हो रहे हैं।

**शूद्राः स्वामिष्वभक्ताश्च स्त्रियः पररताः सुताः ॥**
**त्यक्तमातापितृस्नेहाः शुश्रूषारहिताः परम् ॥१४७॥**

शूद्र अपने स्वामी की भक्ति से विमुख, स्त्रियाँ पर पुरुषों में आसक्त तथा पुत्र माता पिता के प्रति स्नेह से रहित होकर उनकी शुश्रूषा से रहित है।

**विकर्म्मनिरता लोकाः कुकर्म्मण्यतिरागिणः ॥**
**यदा तदाऽतिभारो मे भवत्येव जगद्गुरो ॥१४८॥**

हे जगद्गुरो ! जब लोग विषय भोगादि कर्म में रत और कुकर्म में अत्यन्त अनुरागी हो जाते हैं तब उनका भार मेरे ऊपर अधिक हो जाता है।

**श्रुत्वेति वाक्यं धरणेः पितामहश्चिरं समुद्विग्नमना विचार्य्य ॥**
**सार्द्धं धरित्र्यामरलोकसङ्घैर्ममालयं क्षीरनिधिं जगाम ॥१४९॥**

पितामह ब्रह्माजी पृथ्वी के ऐसे वचनों को सुनकर अत्यन्त ही उद्विग्नचित्त से विचार करके देवताओं और पृथ्वी के साथ मेरे धाम क्षीर-सागर को गये।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके नारदशौनकसंवादे कलिप्रभाववर्णनं नाम चतुर्दशोऽध्यायः ॥१४॥*

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में कलिप्रभाववर्णन नामक चतुर्दश अध्याय समाप्त ॥१४॥*

**येषामक्षिगतो भाति तनुजः परमेश्वरः॥**

**धिग्जन्म तेषां मनुजैर्येर्नैवाराधितो हरिः ॥२५॥**

जिनके नेत्रों के सम्मुख परमेश्वर पुत्र रूप से सुशोभित है। अतः जिन मन्दमति पुरुषों ने नारायण का आराधन नहीं किया उन्हें धिक्कार है।

**भक्तिहीनैर्जनैः कैश्चिन्नालोकि परमेश्वरः॥**

**न कीर्त्तितो हरिर्येन चिन्तितो मनसा न च ॥२६॥**

भक्तिभावरहित जिन पुरुषों ने नारायण का दर्शन नहीं किया, जिन्होंने नारायण का कीर्त्तन अथवा एकाग्र मन से चिन्तन नहीं किया।

**वृथा च सन्ति ते येषां जीवितं भक्तिवर्जितम्॥**

**एभिस्तु नवधा भक्तिः कृता वै व्रजवासिभिः ॥२७॥**

वे व्यर्थ हैं और नारायण की भक्ति से रहित हैं उनका जीवन निष्प्रयोजन है, परन्तु इन व्रजवासियों ने नारायण की नवधा भक्ति की है।

**ये पश्यन्ति प्रतिदिनं रूपवद्ब्रह्म निर्गुणम्॥**

**कृष्ण विष्णो परेशाद्य शिवरूपं वृथा मम ॥२८॥**

जो व्रजवासी निर्गुण परमेश्वर को साक्षात् अपने नेत्रों से देखते हैं। और हे कृष्ण! विष्णो! परमेश्वर! हे आदि पुरुष! मेरा यह शिवरूप व्यर्थ ही है।

**आनन्दभवसंप्लावैर्न सस्मार निजां तनुम्॥**

**ततो नराधिपः प्राह धिगस्मान्देवरूपिणः ॥२९॥**

इस प्रकार के वचन कहकर आनन्द के वेग से गद्गद हो अपने शरीर की सुधि भूल गये तब महेन्द्र (इन्द्र) कहने लगे कि हमारे देव रूप धारण करने को धिक्कार है।

**स्वर्गस्थैरपि यैर्नैव सुखमत्रानुभूयते॥**

**इत्थमन्येऽपि लोकेशा याग्निवरुणादयः ॥३०॥**

स्वर्ग में रहकर भी जिन्होंने ऐसे सुख और आनन्द का अनुभव नहीं किया। इसी प्रकार अन्य यम, अग्नि तथा वरुण इत्यादि लोकपाल भी।

**ऊचुर्मया कटाक्षेण वीक्षितास्तुष्टिमागताः॥**

**ततोऽहं बालरूपेण प्रारोदन्मोहयंश्च तान् ॥३१॥**

मेरे द्वारा कटाक्ष पूर्वक देखे गये और सन्तुष्टि को प्राप्त हुए वे बोले। उन्हें मोहित करता हुआ मैं बालरूप से रुदन करने लगा।

**विमोहितास्ते प्रययुः स्वं स्वं स्थानं प्रणम्य माम्॥**

**अद्भुतं कथयंश्चैव यद्दृष्टं परमोत्सवम् ॥३२॥**

वे भी अत्यन्त मोहित होकर मुझे प्रणाम करके अपने-अपने स्थानों को चले गये, जो उन्होंने अद्भुत परमोत्सव देखा था उसे आपस में कहते थे।

***श्रीकृष्ण उवाच***

**मुने गोपाश्च गोप्यश्च गायमानाः परस्परम्॥**

**आनन्दसंप्लवे मग्ना गता दूरं ममान्तिकात् ॥३३॥**

श्रीकृष्ण बोले कि, हे मुने! गोप और गोपियाँ आनन्द की बाढ़ में डूबे हुए परस्पर गीत गाते हुए मुझसे दूर चले गये।

**प्रेङ्खस्थितं मां विस्मृत्य प्रसुप्तमिव मां विदुः॥**

**आत्मनो गुणगानस्य श्रवणेऽभून्मनो मम ॥३४॥**

पलंग पर स्थित मुझे भूलकर मुझे सोता हुआ जाना। मेरा मन भी अपने गुणगान के श्रवण में तत्पर हो गया।

**नाहं वसामि वैकुण्ठे योगिनां हृदये न च॥**

**मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥३५॥**

हे नारद! न तो मैं वैकुण्ठ में वास करता हूँ और न मैं गोपियों के हृदय में ही वसता हूँ परन्तु जिस स्थान पर मेरे भक्त मेरा स्मरण करते हैं मैं उसी स्थान पर विराजमान रहता हूँ।

**नित्यं शृण्वन्ति गायन्ति मत्कीर्तिं ते व्रजौकसः॥**

**मनुष्यबुद्ध्या पश्यन्ति लोका मामन्धदृष्टयः ॥३६॥**

यह व्रजवासी लोग सर्वदा मेरी कीर्त्ति को सुनते और गाते हैं और अज्ञानता से अन्ध दृष्टि वाले लोग मुझे मनुष्य की बुद्धि से देखते हैं।

**मद्भक्तसदृशो लोके पिता माता गुरुर्न हि॥**

**न बन्धुर्नापरे चैव इति वेदविदो विदुः ॥३७॥**

मेरे भक्त के समान संसार में पिता, माता और गुरु कोई भी नहीं है, मेरे समान संसार में बंधु भी दूसरा दिखाई नहीं देता, यह तो वेदों के जानने वाले जानते हैं।

**ये मत्कीर्त्तौ जनं सक्तं पृथक्कुर्व्वन्ति मानवाः ।।**
**तथा मद्द्वेषिणो नित्यं पतन्ति नरकेऽशुचौ ।।३८।।**
**शृणोमि स्वयशोगानं प्रेम्णा भक्तैरुदाहतम् ।।**
**कृतं गोपैश्च गोपीभिर्गानं त्यक्त्वा च कौतुकम् ।।३९।।**

जो मनुष्य मेरी कीर्त्ति के भजन करने वाले मनुष्य को अलग करते हैं वह मेरे द्वेषी हैं इसी कारण से वह बड़े अपवित्र नरक में गिरते हैं, कोई व्यक्ति यदि प्रेम और भक्ति के साथ व्याकुल होकर मेरी महिमा का गान करे तो मैं उसको आग्रह के साथ सुनता रहता हूँ, इन गोप और गोपियो ने कौतुक को त्याग कर मेरा गान किया है।

**ततः प्ररुद्य रोषात्तु पद्भ्याञ्च शकटो हतः ।।**
**शकटः पर्य्यगाद्भिन्नभाण्डोपस्कारपूजितः ।।४०।।**

मैंने क्रोधित होकर ऊँचे स्वर से रोदन कर अपने चरण की सहायता से शकट में आघात किया तो वह उसी समय उलट गया, उसमें जो बरतन इत्यादि रक्खे थे। वे टूट फूट गये।

**निशम्य शकटं भग्नं किमेतदिति विस्मिताः ।।**
**तत्रागता मां ददृशुरक्षतं हृष्टमानसम् ।।४१।।**

शकट के टूट जाने के शब्द को सुनकर सब लोग यह क्या हुआ इस प्रकार और अत्यन्त आश्चर्ययुक्त हो गये और वहाँ आये तथा अक्षत और प्रसन्न मन वाले मुझको देखने लगे।

**उत्थायाङ्कगतं चक्रुस्तर्कयन्ति सचित्रधा ।।**
**केनेदं शकटं भग्नं दृश्यतेऽस्य न कारणम् ।।४२।।**

उसी समय मुझको गोदी में उठा लिया और वे लोग विस्मय सहित भाँति-भाँति के सन्देह करते हुए आपस में कहने लगे कि किस मनुष्य ने इस शकट को तोड़ा है, शकट के टूटने का कोई कारण भी नहीं दृष्टिगत होता है।

**बाला ऊचुरनेनेति शकटः प्रपदा हतः ।।**
**विपर्य्यगान्न सन्देहो दृष्टमस्माभिरत्र हि ।।४३।।**

वहाँ बच्चों ने बतलाया कि इसी बालक ने पैर मारकर शकट को तोड़ा है, यह बात हमारे सामने हुई है इसमें किञ्चित् भी सन्देह नहीं है।

**तेषां न श्रद्दधुर्वाचो बालभाषितमित्युत ॥**
**अन्यभावास्तेन तत्र गोपा गोप्यः समन्ततः ॥४४॥**

यह बच्चों की बात है अतः लोगों ने उनकी बात का विश्वास नहीं किया तत्पश्चात् अन्य भाव वाले गोप और गोपियाँ ने एकत्र होकर।

**सम्यग्विधाय शकटं ततो दानान्यदुर्मुदा ॥**
**गाः स्वर्णरूप्यवासांसि रत्नान्यन्नानि श्रद्धया ॥४५॥**

शकट को सम्भाल कर अच्छी तरह से रक्खा और प्रसन्नचित्त होकर गौ, सुवर्ण, चाँदी, वस्त्र, रत्न और विविध प्रकार के अन्न श्रद्धा के साथ दान किया।

**आशिषः प्रददौ विप्राः कोटीः सन्तुष्टमानसाः ॥**
**यशोदया च नन्देन गोप्यो गोपाश्च पूजिताः ॥४६॥**

ब्राह्मणों ने भी सन्तुष्ट होकर आशीर्वाद दिये इसके बाद पिता नन्द जी ने यशोदा जी के साथ मिलकर गोप और गोपियों की यथाविधान से पूजा की।

**प्रययुः स्वगृहाण्येव दत्त्वा च परमाशिषः ॥**
**आगत्य नानादेशेभ्यः याचकास्तत्र आवसन् ॥४७॥**

वे भी आशीर्वाद देते हुए अपने-अपने घरों को चले गये। इधर याचक लोग दूर-दूर अनेक स्थानों से आकर वहाँ वास करने लगे।

**सङ्गृह्य नन्ददानानि परं ते धनिनोऽभवन् ॥**
**श्रुत्वा दानं महत्तत्र दीना विद्योपजीविनः ॥४८॥**

तब नन्दजी ने भी उनको इतना दान दिया कि वह एक बार में ही धनी हो गये, भाँति-भाँति की विद्या से अपनी आजीविका का निर्वाह करने वाले मनुष्य इस बड़े भारी दान के वृत्तान्त को सुनकर।

**वसन्ति स्म व्रजे नित्यं न यान्त्यन्यत्र कर्हिचित् ॥**
**आधिव्याधिविनिर्मुक्तास्तापत्रयविवर्जिताः ॥४९॥**

व्रज में रहने लगे और वह वहाँ से कहीं को भी नहीं जाते थे, वे आधि व्याधि से रहित तथा दैहिक दैविक और भौतिक ताप से विवर्जित थे।

**आसन्व्रजौकसः सर्व्वे मन्निवासने नारद ॥**
**यत्र मे श्रवणादीनि मङ्गलानि भवन्ति हि ॥**
**तत्र किञ्चिन्न दुःखं स्यात्किं पुनर्मम वासतः ॥५०॥**

हे नारद ! जिस स्थान पर सर्वदा मेरा नाम और महिमा श्रवणादि रूप मङ्गल का देने वाला अनुष्ठान होता है उस स्थान पर कभी विपत्ति का लेश भी नहीं आता, जहाँ मैं साक्षात् विराजमान रहता हूँ फिर उस स्थान की वार्ता और क्या कहूँ।सभी व्रजवासी मेरे निवास में हैं।

*नारद उवाच*

**भगवन्देवदेवेश श्रीकृष्ण करुणाकर ॥**
**श्रुत्वा ते बालचरितं न मनस्तृप्यते मम ॥५१ ॥**

श्रीनारद जी बोले कि हे भगवन् ! हे देव देवेश ! हे श्रीकृष्ण ! हे करुणाकर ! आपके बालचरित्रों को सुनकर मेरे मन की तृप्ति नहीं हुई।

**इन्द्राद्यैः संस्तुतं को नु तद्बालचरितं हरे ॥**
**न शृणोत्यभितो मर्त्यः श्रोतव्यममरोत्तमैः ॥५२ ॥**

हे कृष्ण ! इन्द्रादि देवताओं से संस्तुत यह तुम्हारा बालचरित है। कृष्ण ! देवताओं के द्वारा सुनने योग्य तुम्हारा चरित्र यदि मनुष्य सब ओर से नहीं सुनते तो वे व्यर्थ है।

**कृपया ब्रूहि मे नाथ आत्मीयं बालचेष्टितम् ॥**
**यस्य श्रवणमात्रेण शुध्यन्ति मलिना जनाः ॥५३ ॥**

हे नाथ ! कृपया अपने बाल चरित्र को कहिए, जिसके श्रवण मात्र से मलिन लोग शुद्ध अर्थात् पवित्र हो जाते हैं।

*भगवानुवाच*

**शृणु नारद वक्ष्यामि बालचेष्टितमात्मनः ॥**
**शृण्वतां परमानन्दकारणं भक्तिसाधनम् ॥५४ ॥**

भगवान् बोले कि हे मुनि ! सुनो मैं अपने बाल चरित्रों को कहता हूँ, उसके सुनने वालों को परमानन्द तथा भक्ति का साधन प्राप्त होता है।

**अङ्कमारोप्य जननी यदा पश्यति मे मुखम् ॥**
**ब्रवीति पुत्र वत्सेति तदा मे जायते स्मितम् ॥५५ ॥**

माता यशोदा जी प्रीति में भरकर मुझे अपनी गोदी में लेकर मेरे मुखकमल को देखती हुई मुझे पुत्र कहकर पुकारतीं तो मैं मुस्कराता हूँ।

**अहो बलं मे मायायाः सर्व्वेशमपि मामियम् ॥**
**जानाति पुत्रं बाल्येन सुस्मितास्यसुखप्रदम् ॥५६ ॥**

**इति ज्ञात्वा मया मात्रे पुत्रप्रेमनियोजितम् ॥**
**जानूपरि तु संवेश्य सर्व्वाङ्गं वीक्ष्य मामकम् ॥५७॥**

अहो! मेरी माया कैसी बलवती है, मैं चराचर संसार का अद्वितीय ईश्वर हूँ, तो भी यह माता मुझे अपना पुत्र मानती है, मैं भी उसी बालक रूप से मुस्कराहट युक्त मुख से सुखप्रदान करता हूँ। यह जानकर मैंने माता को पुत्र रूपी प्रेम में फँसा रखा मुझको अपनी जंघा पर बैठाकर मेरे समस्त शरीर को देखती हुई।

**पृच्छन्त्यां नाना वार्त्तां मां मम सञ्जायते स्मितम् ॥**
**न वदाम्यतिबालत्वाद्वाच्यमानो निरन्तरम् ॥५८॥**

फिर मुझसे नाना प्रकार की बातें पूछती थीं उनको सुनकर मैं हँसता, मुस्कराता था और कभी-कभी बालस्वभाव होने के कारण बार-बार कहने पर भी चुप रहता था।

**तद्वीक्ष्य गोपगोपीनां जायते परमं सुखम् ॥**
**न करोति कदाचिद्वै मां हि दृष्टिपथाद्बहिः ॥५९॥**

उसको देखकर गोप गोपियाँ समस्त ही आनन्दित होते थे, वह सभी मेरे स्वरूप के पक्षपाती हो गये थे, वह एक क्षण को भी मेरे बिना देखे नहीं रहते थे।

**स्वप्नेऽपि मां लालयन्ति पश्यन्त्यानन्दकारणम् ॥**
**एवं व्रजौकोभिः सार्द्धं बाललीलां करोम्यहम् ॥६०॥**

वह स्वप्न में भी मुझे खिलाते हुए अपूर्व आनन्द को पाते थे, इस प्रकार उन व्रजवासियों के साथ मैं बाललीला करता था।

**पूतनायाः पतिर्गेहे आगाम घटोदरः ॥**
**श्यालाभ्यां सहचान्याभ्यां नानुलोक्यात्मवल्लभाम् ॥६१॥**

इस ओर पूतना का पति घटोदर भयंकर दोनों सालों को अपने साथ लिए हुए घर में आया और अपनी प्यारी स्त्री को घर में न देखकर।

**सुप्तां वृकोदरीं वीक्ष्य तामुत्थाप्याह दुःखितः ॥**
**अघासुरो बकश्चैव भ्रातरौ ते महाबलौ ॥६२॥**

वृकोदरी को सोती हुई देखकर उसी समय उसको उठाकर फिर दुःखितहृदय होकर कहा अघासुर और बकासुर दो तुम्हारे महाबलवान् भाई हैं।

**वृकोदरीह मे भार्य्या नापयाति गृहात्क्वचित्।।**

**क्व गता सा वदाशु त्वं मनो मेऽतीव पीडितम् ।।६३।।**

हे वृकोदरी! मेरी प्राण प्यारी भार्या पूतना कहाँ है? वह कहाँ गयी है किसलिए घर नहीं आती? कहाँ रहती है शीघ्र बतलाओ। मेरा मन व्याकुल हो रहा है।

**यदङ्गसङ्गाद्बालानां मरणं विधिनिर्मितम्।।**

**भवत्यवश्यं सा बाला क्व गता वद तत्त्वतः ।।६४।।**

जिसके अङ्ग को स्पर्श करते ही बालकों की उसी समय मृत्यु हो जाती थी वह स्त्री पूतना कहाँ चली गयी सच-सच बताओ।

**श्रुत्वा घटोदरवचो भगिनी शोकपीडिता।।**

**उवाचाश्रुमुखी भूत्वा सन्तप्ता सा वृकोदरी ।।६५।।**

घटोदर के ऐसे वचन सुनकर शोक से सन्तप्त उसकी बहन नेत्रों में आँसू भर कर पीडित होकर कहने लगी।

**घटोदर महाबुद्धे कंसो दुःस्वप्नदुर्मनाः।।**

**बालकानां विनाशाय पूतना प्रेषिता व्रजे ।।६६।।**

हे घटोदर! परम बुद्धिमान्। महाराजा कंस ने बुरे स्वप्न देखकर अत्यन्त दुःखित मन होकर ब्रजवासियों के बालकों को मारने के लिए पूतना को व्रज में भेजा था।

**मयाऽनुमोदिता सापि कंसप्रियचिकीर्षया।।**

**मृता तत्रैव नायाता परावृत्त्य प्रिया तव ।।६७।।**

वहाँ वह मेरे द्वारा अनुमोदित होकर कंस के प्रिय कार्य की इच्छा से अपने प्राण त्याग दिये फिर वह तुम्हारी प्रिया यहाँ लौटकर नहीं आयी।

**कंसं पृष्ट्वा तत्र गच्छ श्यालौ बाह्यं नियोजय।।**

**व्रजौकसां विनाशाय यैर्भार्य्या ते विनाशिता ।।६८।।**

अब तुम कंस के पास जाकर उनसे पूछो व्रजवासियों के नाश करने के लिए इन सालों को नियुक्त करो जिन्होंने तुम्हारी भार्या को विनष्ट कर दिया है।

**स इत्थं तद्वचः श्रुत्वा क्रुद्धः कंसान्तिकं ययौ।।**

**अघासुरवकाभ्याञ्च सहितः कम्पयन्महीम् ।।६९।।**

क्रोधित घटोदर, वृकोदरी के ऐसे वचन सुनकर अघासुर और बकासुर के साथ पृथ्वी को कँपाता हुआ कंस के पास गया।

**उवाच कंसमासाद्य भार्य्या मे किं विनाशिता ॥**
**अतिप्रिया नराहारा बलिष्ठा बालघातिनी ॥७० ॥**

वह राजा कंस के पास जाकर बोला कि, तुमने किस लिए मेरी अत्यन्त प्रिया स्त्री का नाश करवा दिया है, वह मनुष्यों का आहार करती थी अत्यंत बलिष्ठ होकर बालकों का वध करती थी।

**पूतनाभ्रातरौ क्रुद्धा ऊचतुः कंसमातुलौ ॥**
**आवां व्रजविनाशाय व्रजावो यैर्विनाशिताः ॥७१ ॥**

पूतना के दोनों भ्राता अघासुर और बकासुर जो कंस के मामा थे क्रोध पूर्वक कंस से कहने लगे कि जिसने हमारी अत्यन्त प्यारी भगिनी पूतना का विनाश करवाया है अब हम दोनों उन ब्रजवासियों के मारने के लिए जाते हैं।

**प्रेष्ठा नो भगिनी राजंस्त्वमाज्ञापय मा क्रुधः ॥**
**भक्ष्यमिष्टं विनिर्द्दिष्टं विधात्रा व्रजसञ्ज्ञितम् ॥७२ ॥**

बहन हमारी अत्यन्त ही प्यारी थी, हे राजन्! आप आज्ञा दीजिए किसी प्रकार से भी क्रोधित न होना, स्वयं विधाता ने व्रजरूपी अभीष्टभक्ष्य हमारे लिए बता दिया है।

**तेषां तद्वचनं श्रुत्वा कंसोऽप्याहातिसान्त्वयन् ॥**
**घटोदर महाबुद्धे अघासुरबकासुरौ ॥७३ ॥**

कंस उनके ऐसे वचन सुनकर उन्हें धैर्य देता हुआ कहने लगा कि हे घटोदर !हे अघासुर! हे बकासुर! तुम सभी अत्यन्त बुद्धिमान् हो।

**ममैव प्रेषिता घोषं पूतना चात्महेतवे ॥**
**दुःखप्रदर्शनेनालं भीतेनासुरसत्तमाः ॥७४ ॥**

मैंने ही तुम्हारी अत्यन्त प्यारी बहन पूतना को अपने कार्य्य करने के लिए ब्रज में भेजा था, हे असुरसत्तम! तुम किसी प्रकार से भी दुःखित और भयभीत मत हो।

**बालकानां विनाशाय तया चैवान्यथा कृतम् ॥**
**गरलं स्वस्तने लिप्त्वा कैतवं रूपमाश्रिता ॥७५ ॥**

मैंने बालकों को मारने के लिए ही पूतना को भेजा था वह उसके विपरीत हुआ अपने दोनों स्तनों में विष को लगाकर उसने अपना कपट रूप बनाया।

**विचरन्ती व्रजे कञ्चिज्जगृहे बालकं परम् ।।**
**स्वभावात्तेन बालेन स्तनेऽकारि नखक्षतः ।।७६ ।।**

व्रज में घूमती हुई उसने एक बालक को पकड़ा दूध पिलाने के स्वभाव से उस बालक ने उसके स्तनों में नखाघात किया।

**ततो गरलदोषो वै प्रविष्टो रक्तमार्गतः ।।**
**मृता गरेण सा मूढा आत्मबुद्धिविकारतः ।।७७ ।।**

तब वह विष रक्त मार्ग से प्रविष्ट हो गया। अपनी बुद्धि के दोष से ही वह मूर्खा विष से मर गयी।

**अतो न कस्यचिद्दोषो व्रजवासिजनस्ये हि ।।**
**यदि वैरं कृतं वस्तैर्व्रजवासिजनैरलम् ।।७८ ।।**

अतः इसमें किसी व्रजवासी का कुछ भी दोष नहीं है, तथापि यदि तुम व्रजवासियों को अपना शत्रु मानते हो तो वह पर्याप्त है।

**तदाहं प्रेषयाम्यद्य तृणावर्त्तं महाबलम् ।।**
**महावातस्वरूपेण मानवान्नेष्यते दिवम् ।।७९ ।।**

तब मैं आज तृणावर्त को व्रज में भेजता हूँ यह तृणावर्त्त महावायु का स्वरूप धारण कर मनुष्यों को आकाश में ले जा सकता है।

**नानाकाशपथे नीत्वा मारयत्यखिलांस्ततः ।।**
**घातयिष्यामि युष्माकं प्रीतये न चिरेण हि ।।८० ।।**

वह अनेक प्रकार से आकाशमार्ग में ले जाकर उन सबका वध कर देता है, मैं तुम्हारी प्रीति को बढ़ाने के निमित्त शीघ्र ही उन सबका वध कराऊँगा।

**एवं कंसोऽवारयद्दैत्यमुख्यांस्तेऽपि श्रुत्वा तोषमापुर्मुनीन्द्र ।।**
**ज्ञात्वा चैतान्मानसं स्वप्रियं हि कंसं प्रोचुः साधु ते मन्त्रितं वै ।।८१ ।।**

हे मुनीन्द्र ! इस प्रकार कंस ने मुख्य दैत्यों को शोक से दूर किया और वे भी सुनकर प्रसन्न हुए। इनसे अपने मानसिक प्रिय को जानकर वे उत्तम मन्त्रणा हेतु कंस से बोले।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके नारदशौनकसंवादे अघासुरादिकंसविचारो नामैकोनविंशोऽध्यायः ।।१९ ।।*

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में अघासुरादिकंस विचार नामक ऊनविंश अध्याय समाप्त ।।१९ ।।*

# विंशोऽध्यायः

*श्रीकृष्ण उवाच*

**आकर्ण्य तत्कंसवचस्त्रयस्तेऽति प्रहर्षिताः ॥**

**आहुश्च राजंस्त्वं शीघ्रं तृणावर्तं समाह्वय ॥१ ॥**

श्रीकृष्ण बोले कि, वे तीनों कंस के ऐसे वचनों को सुनकर अत्यन्त हर्षित होकर बोले कि महाराज ! आप अपने कार्य में विलम्ब न करके अतिशीघ्र तृणावर्त को बुलाइये।

**अथ कंसस्तृणावर्त्तं प्रसुप्तं बहुकालतः ॥**

**दूतैरानाययामास दृष्ट्वा तं पुरतः स्थितम् ॥२ ॥**

तृणावर्त बहुत दिनों से सो रहा था कंस ने अपने दूतों को भेजकर उसको बुलाया, उसे सामने स्थित देखकर।

**उवाच वचनं घोरं तीक्ष्णबुद्धिर्महाबलः ॥**

**उवाचोच्चैस्तृणावर्त्तं भूतहिंसापरायणम् ॥३ ॥**

महाबलवान् तीक्ष्णबुद्धि कंस भयङ्कर और उच्च स्वर में तृणावर्त्त से बोला कि तुम प्राणियों को मारने में चतुर हो।

**तृणावर्त महाबाहो कार्य्यं मे समुपागतम् ॥**

**अत्यल्पमपि तत्कार्य्यं नान्यस्त्वत्तोऽस्ति मे प्रियः ॥४ ॥**

हे महाबाहु ! तृणावर्त्त ! मेरे कार्य करने के निमित्त इस समय यहाँ आये हो उस कार्य के छोटे होते हुए भी तुम्हें करना है। तुम से अधिक प्रिय और दूसरा नहीं है।

**इदं त्वल्पतरं ते हि व्रजमानवमारणम् ॥**

**पूर्व्वदुःस्वप्नयोगेन पूतना प्रेषिता मया ॥५ ॥**

व्रजवासियों को मारना यह एक सामान्य कार्य है। पहले मैंने बुरे-बुरे स्वप्न देखे थे, अतः अपने कार्य को करने के लिए मैंने पूतना को भेजा था।

**सा प्रनष्टात्मदोषेण गरलेन प्रमादतः ॥**

**तथापि तत्पतिद्वेषं त्यजते न घटोदरः ॥६ ॥**

वह अपने ही अपराध के प्रमाद वश स्तनों में विष लगाकर मर गयी तो भी उसका पति घटोदर वैर को नहीं त्याग रहा है।

**तत्पितृव्यात्मजौ घोरावघासुरवकासुरौ ॥**

**क्रुद्धौ मारितुमुद्युक्तौ दुर्ब्बलान्व्रजवासिनः ॥७॥**

उसके चाचा के पुत्र अघासुर और बकासुर क्रोधित होकर निर्बल व्रजवासियों को मारने के निमित्त तैयार है।

**मया निवाारितास्तेऽद्य प्रजाघातभयेन हि ॥**

**महावातस्वरुपेण बालकं तत आनय ॥८॥**

प्रजा के नाश हो जाने के भय से मैंने उसको रोका है, तुम महावायु की मूर्ति को धारण कर उस बालक को ले आओ।

**अथवा येन नीता सा पूतना बालघातिनी ॥**

**दृष्टा सौम्यस्वरूपेण पूर्व्वमेव व्रजौकसा ॥९॥**

अथवा जिस ब्रजवासी ने बालघातिनी पूतना का मनोहर रूप देखकर उसको पकड़ा हो, उसे ले आओ।

**क्व गता मारिता केन मानवं तं विलोक्य च ॥**

**ततो वातस्वरूपेण पूतनाकालबालकम् ॥१०॥**

वह कहाँ गयी अथवा उसे किसने मारा उस मनुष्य को देख कर और पूतना के काल बालक को।

**नीत्वा नान्ये निहन्तव्या आनेयः स हि बालकः ॥**

**पूतना येन नीतान्तं स हि मृत्युं समर्हति ॥११॥**

लेकर यहाँ लोगों को न मारना जिस बालक ने पूतना का वध किया है वही मृत्यु के योग्य है।

**अतस्त्वमेव गच्छाद्य सर्व्वेषां प्रीतिमावह ॥**

**इति श्रुत्वा तृणावर्त्तो मुदितः कंसमब्रवीत् ॥१२॥**

तुम इस समय जाओ और सबकी प्रीति की वृद्धि करो। तृणावर्त कंस के यह वचन सुनकर अत्यन्त हर्षित होकर बोला।

**यदि त्रैलोक्यघातार्थं मामाज्ञापयसि प्रभो ॥**

**न दुष्करं नैतदपि किन्तु विज्ञापयामि ते ॥१३॥**

हे महाराज! इस सामान्य व्रज की तो बात ही क्या आप यदि त्रिलोकी को मारने के निमित्त मुझे आज्ञा दें तो भी दुष्कर नहीं है। यह आप से मैं विज्ञापित कर रहा हूँ।

**अकस्माद्वेपथुश्चासीद्हृदये मम साम्प्रतम्॥**
**सीदन्ति मम गात्राणि बामः स्फुरति मे भुजः ॥१४॥**

आपकी वार्ता को सुनते ही अकस्मात् मेरा हृदय कम्पित हो रहा है, मेरे अङ्ग शिथिल हो रहे हैं, मेरी बाईं भुजा फड़कने लगी है।

**स्वप्ने दृष्टा च जननी मृतं मां कण्ठसङ्गिनम्॥**
**कृत्वारुदद्भृशं पुत्र कृष्णस्त्वां मारयिष्यति ॥१५॥**

मैंने आज रात्रिं में स्वप्न देखा कि मैं मृतक हो गया हूँ, और मेरी माता मानो मुझे गले लगाकर इस अवस्था में ऊँचे स्वर में रोती हुई यह कह रही है कि हाय बेटा। कृष्ण तुमको अवश्य ही मार डालेगा।

**इत्युक्त्वान्तर्हिता सद्यः स्वप्नाच्चाहं समुत्थितः॥**
**प्रातरेव त्वयाहूत आगतोऽस्मि तवान्तिकम्॥**
**किं करोमि तवाज्ञा का यद्भाव्यं तद्भविष्यति ॥१६॥**

यह कह कर उसी समय अन्तर्धान हो गयी, और तभी मैं स्वप्न से उठा और प्रातःकाल होते ही आपने मुझे बुलाया आपके पास आ गया हूँ। क्या करुँ आपकी क्या आज्ञा है। जो होना होगा वह होगा ही।

***कंस उवाच***

**तृणावर्त्त न ते मृत्युर्भविता दैवतैरपि॥**
**किं पुनर्मानुषादेव तत्र चाप्यतिबालकात् ॥१७॥**

कंस बोला कि, हे तृणावर्त! तुम्हारी मृत्यु देवताओं के द्वारा भी नहीं हो सकती फिर मनुष्यों की तो बात ही क्या, और विशेष करके एक सामान्य बालक तो इस योग्य नहीं हो सकता।

**असुरास्ते प्रियाः सर्व्वे सुरास्त्वल्पबलास्तव॥**
**भयाल्लोकास्त्यजन्त्याशु निलीयन्त इतस्ततः ॥१८॥**

जितने असुर हैं वे सब तुमसे अत्यन्त स्नेह करते हैं, देवताओं का तुम्हारे सामने हीन ब्रल है इसके अतिरिक्त अन्य लोक के मनुष्य तो तुमको देखते ही इधर उधर छिप जाते हैं।

**यदि स्वप्नगता वार्त्ता सत्या भवति नित्यशः ॥**

**तदा मे स्वप्नवाक्यं त्वं विश्रब्धं च शृणुष्व हि ॥१९॥**

यदि स्वप्न की वार्ता नित्य सत्य होती है तो मेरे स्वप्न वाक्य को तुम विश्वास पूर्वक सुनो।

**पर्व्वतारोहणं स्वप्ने दूरदेशगतिस्तथा॥**

**सङ्गमः पुत्रभार्य्याभिर्बन्धुभिर्न हि दृश्यते ॥२०॥**

स्वप्न में देखते है कि हम विशाल पर्वतों के ऊपर विचर रहे हैं, अथवा किसी दूर देश में गये हैं किंवा पुत्र एवं भाई बंधुओं से समागम हुआ हैं, परन्तु जागकर प्रातः समय देखें तो वहाँ कुछ भी नहीं होता।

**सुप्तेन पुरुषेणेह भुङ्क्ते भोगमनल्पकम्॥**

**क्लेशितं विविधं प्रातः स्वप्ने दृष्टं मृतं ततः ॥२१॥**

यहाँ सोता हुआ प्रसन्न प्रभूत भोगों को भोगते हुए अपने को देखता है अथवा क्लेशित होकर मृत्यु को प्राप्त होता हैं, परन्तु जाग्रत होने पर वह सब कुछ नहीं है।

**अतो गच्छ व्रजं शीघ्रं मद्वाक्यञ्च विधत्स्व भोः॥**

**दास्येऽहं विविधान्भोगान्कार्यं कृत्वाऽऽगमिष्यसि ॥२२॥**

अतएव तुम ब्रज में जाओ मेरे वाक्य का आचरण करो, जब मेरे कार्य को सिद्ध करके लौटोगे तब मैं विविध प्रकार के भोग प्रदान करुँगा।

*श्रीकृष्ण उवाच*

**इति कंसवचः श्रुत्वा हर्षितोऽभून्महासुरः॥**

**उवाच कंसमाभाष्य वीटकं देहि मे नृप ॥२३॥**

श्रीकृष्ण जी बोले कि कंस के ऐसे वचन सुनकर महासुर तृणावर्त अत्यन्त हर्षित हुआ और प्रीतिपूर्वक कंस से कहने लगा कि हे राजन्! मुझे आप पान का बीड़ा दीजिए।

**व्रजाम्यद्य तवाज्ञा चेन्निहन्म्येव व्रजौकसः॥**

**इत्युक्तस्तेन कंसोऽपि प्रददौ वीटकं शुभम् ॥२४॥**

यदि आपकी आज्ञा है तो मैं ब्रज में जाकर वहाँ के निवासी ब्रजवासियों का संहार करूँगा, तृणावर्त के यह वचन कहने पर कंस ने उसको सुन्दर पान का बीड़ा दिया।

**सगृहीत्वा प्रचलितस्तृणावर्त्तो महाबलः ॥**
**तथा प्रचलिते दैत्ये विधवा मुक्तमूर्द्धजा ॥२५॥**

वह महाबलवान् असुर तृणावर्त उस बीड़े को लेकर व्रज की ओर चला, तब उसके वहाँ से चलने पर अकस्मात् ही एक विधवा स्त्री बालों को खोले हुए।

**कापि स्त्री पावकं नीत्वा सधूमं पुर आययौ ॥**
**तथान्या रुदती काचिदागता पतिताडिता ॥२६॥**
**हाहेति शब्दं कुर्व्वाणा घ्नन्ती स्वशिर उत्कचम् ॥**
**तथाऽपि चलितो दृष्ट्वा दुष्टोऽप्यशकुनं पुरः ॥**
**गणयित्वा न दुर्बुद्धिः प्रविवेश ब्रजान्तरम् ॥२७॥**

और कोई स्त्री सधूम अग्नि हाथ में लिये और कोई स्वामी से ताडित वह स्त्री हाहाकार करती हुई ऊँचे स्वर से रोती और वेग के साथ सिर को पीटती हुई उसके सामने निकली, तृणावर्त यह अशकुन देखकर भी चलता रहा। वह दुर्बुद्धि इन सबकी कुछ भी गणना न करके व्रज के अन्तर्गत प्रविष्ट हो गया।

**पृच्छमानो महादुष्टः पूतनागमनादिकम् ॥**
**तत्राविशन्नन्दगृहं श्रुत्वा तत्र विचेष्टितम् ॥२८॥**

यह महादुष्ट तृणावर्त ब्रज के भीतर जाकर वहाँ के निवासियों से पूतना के आने का वृत्तान्त पूछने लगा, इसके बाद नन्दजी के घर में पूतना मारी गयी है, यह सुनकर उनके घर को गया।

**अङ्के प्राप्तं यशोदाया मां दृष्ट्वा स गतो वने ॥**
**व्रजादथ विनिर्गत्य ततो वातस्वरूपधृक् ॥२९॥**

मुझको माता यशोदा की गोद में देखकर उसी समय व्रज से निकलकर एक वन में जाकर उसने वायु का रूप धारण किया।

**दैत्योऽभूत्स प्रचण्डोऽतिभीषयंश्च व्रजौकसः ॥**
**तृतीयप्रहरे चाथ प्रविवेश महाबलः ॥३०॥**

व्रजबासियों को भयभीत करता हुआ वह महाबली दैत्य प्रचण्ड हो गया और तीसरे प्रहर के समय नन्द जी घर में प्रवेश किया।

**तदाहं मातुरङ्कस्थो विचार्य्यासुरसङ्क्षयम् ॥**
**अङ्गातिभारं कृतवान्सा मेने गिरिगौरवम् ॥३१ ॥**

मैं उस समय अपनी माता की गोदी में लेटा हुआ था, उस दुरात्मा के के नाश का विचार करके अपने शरीर को इतना भारी किया कि माता ने मुझे पर्वत के समान भारी माना।

**भुवि तत्याज सहसा दैत्योऽपि जगृहेऽथ माम् ॥**
**आवृत्य रोदसी पांशुनिचयेनैव चोत्पतत् ॥३२ ॥**

उन्होंने सहसा मुझे पृथ्वी पर त्याग दिया।उसी समय उस दैत्य ने मुझको पकड़ लिया धूल के समूह से आकाश और पृथ्वी दोनों को ढककर उड़ गया।

**मुञ्चन्घोरतरं नादं रुन्धञ्चक्षूंषि रेणुभिः ॥**
**नापश्यत्कश्चिदात्मानं परं वा रेणुबद्धदृक् ॥३३ ॥**

वह धूलिजाल से समस्त मनुष्यों की दृष्टि बन्द करता हुआ और घोर शब्द करता था। घूलि के उड़ने से बद्ध दृष्टि वाला कोई मनुष्य अपने को अथवा दूसरे को नहीं देख सकता था।

**अन्धकारे प्रवृत्ते स मां जहार नभो गतः ॥**
**न शशाक ततो गन्तुं भूरिभारप्रपीडितः ॥३४ ॥**

अन्धकार हो जाने के कारण, वह मुझको आकाश में लेकर पहुँचा, परन्तु मेरे अत्यधिक भारी होने से पीड़ित होकर वहाँ से वह पुनः चलने को समर्थ न हुआ।

**मया गृहीतकण्ठोऽसौ कल्पो मोचयितुं नहि ॥**
**पातितश्च शिलापृष्ठे विशीर्णावयवो ह्यभूत् ॥३५ ॥**

मैं उसके गले को पकड़े हुए था, वह मुझसे किसी प्रकार से भी छुड़ा सका, और उसी समय शिला के ऊपर गिर पड़ा, गिरते ही उसका सब शरीर चूर्ण-चूर्ण हो गया।

**अहन्तेन यदा नीतो यशोदा मामपश्यती ॥**
**रुरोद करुणं तूच्चैर्द्धावन्ती च इतस्ततः ॥३६ ॥**

जिस समय वह मुझको लेकर चला था तब यशोदा जी मुझे वह इधर उधर न देखती हुई दौड़ती हुई उच्च स्वर से करुण विलाप करने लगी।

**निशम्य रुदितं तस्या हा पुत्र क्व गतः स्थितः ॥**
**गोप्यः समन्तादाजग्मु रुरुदुः समदुःखिता ॥३७॥**

बार-बार हा पुत्र तुम कहाँ गये हो सुनकर गोप और गोपियाँ चारों ओर से इकट्ठे होकर आ गये और फिर इन्हीं के समान दुःखी होकर रोने लगे।

**मुहूर्त्तमात्रं तत्रासीन्महापीडाकरं व्रजे ॥**
**गते तस्मिन्नन्धकारे ततः सर्व्वे व्रजौकसः ॥३८॥**

एक मुहूर्त्त के बीच में ही व्रज में यह महापीड़ा घटित हो गयी, इसके बाद जब वह घोर अन्धकार दूर हो गया तब सभी व्रजवासियों ने।

**मामन्वेषितुमुद्युक्ताः शुश्रुवुश्च महास्वनम् ॥३९॥**

मुझे खोजने में लगे हुए एक बड़ी आवाज सुनी।

**शिलायां पततस्तस्य तत्र जग्मुः समाकुलाः ॥**
**ददृशुस्तन्तु पतितं महाकायं महासुरम् ॥४०॥**

उस दैत्य के शिला पर गिरते हुए वहाँ सभी व्याकुल होकर वहाँ गये और वहाँ गिरे हुए विशाल काय असुर को देखा।

**विशीर्णसर्व्वावयवं मद्गृहीतगलं मृतम् ॥**
**दृष्ट्वा तं तादृशं भीता विस्मिताश्च परस्परम् ॥४१॥**

मेरे गले को पकड़ने से उसके प्राण निकल गये हैं, और उसका पूरा शरीर खण्ड-खण्ड हो गया है, उस महाबलवान् असुर को ऐसी अवस्था में देखकर भयभीत होकर आश्चर्य के साथ आपस में कहने लगे।

**न जानीमः कुतो दुष्टः समागत्याऽपतद्व्रजे ॥**
**केन वा घातितोऽयं वा बालको रक्षितः कथम् ॥४२॥**

नहीं जानते कि यह दुष्ट कहाँ से आकर व्रज में गिरा है और किसने इसको मारा है, फिर इस बालक ने किस प्रकार से अपनी रक्षा पायी।

**—नन्द पुण्योदयस्तेऽद्य जातः सर्व्वैर्व्रजालयैः ॥**
**समागतः पुनर्बालो दृष्टस्तस्मान्निरामयः ॥४३॥**

नन्द जी ! आपके इस समय कोई पुण्य ही उदय हो गये थे, इसी कारण से तो समस्त व्रजवासी लोग इस बालक को स्वस्थ आया हुआ देख रहे हैं।

**अहो अत्यद्भुतं चैव नाशं कर्त्तुमिहागतः ॥**

**बालकस्यासुरोऽयं वै स्वयं मृत्युवशं गतः ॥४४॥**

अहो ! यह अत्यन्त ही आश्चर्य का विषय है कि यह महाबलवान् असुर इस बालक को मारने के लिए यहाँ आकर अपने आप ही मृत्यु के वश हो गया है।

**गृहेऽरण्ये जले चाग्नौ पर्व्वते रिपुसङ्कटे ॥**

**स एव रक्षिता शश्वद्गर्भे रक्षति यो विभुः ॥४५॥**

जो भगवान् गर्भावस्था में बालक की रक्षा करते हैं वे ही घर में, बन में, जल में, अग्नि में पर्वत पर और शत्रुओं से सङ्कट में रक्षा करते हैं।

**नाऽयं बालो हि सामान्यो नन्द भाग्योदयस्तव ॥**

**विष्णुर्व्वा विष्णुसदृशो जातोऽयं कश्चिदीश्वरः ॥४६॥**

हे नन्द जी ! यह तुम्हारे भाग्य का उदय हुआ है, यह बालक साधारण नहीं है यह स्वयं विष्णु अथवा विष्णु के समान और कोई देवता इस बालक के रूप में उत्पन्न हुआ है।

**पिता पालय पुत्रं त्वं लालयाऽतिचिरं भृशम् ॥**

**त्रैलोक्यनाथो भगवन्विष्णुश्चेत्तव बालकः ॥४७॥**

तुम यत्न के साथ सावधानी से इस बालक का लालन पालन करो, क्योंकि त्रिलोकी नाथ विष्णु ने ही तुम्हारे घर बालक रूप होकर जन्म लिया है।

**कृतार्थस्त्वं किमत्यत्र वयं चाऽपि समेधिताः ॥**

**इत्युक्त्वा तेऽखिला गोपास्तमालोक्य सुविस्मिताः ॥४८॥**

तुम कृतार्थ हो अधिक क्या कहें। हम लोग भी बढ़ गये ऐसा कहकर वे सभी गोप असुर की ओर देखकर अत्यन्त ही विस्मित हुए।

**विशीर्णसर्व्वावयवं तञ्च दूरं विचिक्षिपुः ॥**

**तं ज्योतिरद्भुततममुत्थितञ्चापि चाविशत् ॥४९॥**

इसके पश्चात् सब मिलकर उस महाबलवान् असुर के समस्त शरीर के अवयव को फेंकने लगे। फेंकने के साथ ही उसमें से एक बड़ी अद्भुत ज्योति निकली और उसी के शरीर में समा गयी।

**सुरा जयजयेत्यूचुर्धन्यधन्येति वै पुनः ॥**
**पापोऽसुरो मत्संस्पर्शान्मदीयं प्राप सङ्गमम् ॥**
**चित्रं नैतन्मत्प्रभावात्सर्व्वेषामुत्तमा गतिः ॥५०॥**

यह देखकर सम्पूर्ण देवता बारम्बार जय-जयकार करते हुए आनन्द के साथ धन्यवाद देने लगे। मेरे शरीर के स्पर्श से ही उसको मेरा सङ्गम अर्थात् मुक्ति मिली है, इसमें कुछ भी विचित्रता नहीं है, मेरे प्रभाव से सभी की एक उत्तम गति होती है।

*श्रीनारद उवाच*

**तृणावर्त्तोऽसुरः पापः भृशं रुधिरभोजनः ॥**
**कथं त्वया विनिहतो गृहीत्वा कण्ठ एव हि ॥५१॥**

श्रीनारद जी बोले कि वह पापी तृणावर्त सर्वदा मनुष्यों का रूधिर पान करता था, अतः आपने किस प्रकार उसके गले को पकड़कर उसके प्राण निकाले।

**स्पर्शो यस्य न कर्त्तव्यः तं मृतञ्चास्पृशद्धशम् ॥**
**उचिता कुत्सिता यस्य प्राप्तोऽसौ तां गतिं कथम् ॥५२॥**

जिसको किसी प्रकार भी स्पर्श नहीं करते, उसके मर जाने पर भी आपने किस कारण उसका स्पर्श किया।उसकी गति अत्यन्त कुत्सित होने योग्य थी, परन्तु वैसा न होकर उसने उत्तम गति प्राप्त की, इसका क्या कारण है।

**किं प्राक्तनं शुभं तस्य पूर्व्वजन्मनि तत्कृतम् ॥**
**संशयो मे महाञ्जातस्त्वं तच्छेत्तुमिहार्हसि ॥५३॥**

उसने पूर्वजन्म में ऐसा कौन सा प्राक्तन शुभ कार्य किया था अथवा उसकी सुगति क्यों हुई इसमें मुझे अत्यन्त ही सन्देह उत्पन्न हुआ है उसे आप कृपा करके दूर कीजिए।

*श्रीकृष्ण उवाच*

**शृणु विप्र महच्चित्रं यज्जातं प्राग्भवेऽस्य वै ॥**
**मद्भक्तिकार्य्यं सुमहद्ययौ तत्फलमुत्तमम् ॥५४॥**

श्री कृष्ण जी बोले कि हे विप्र ! इसने पूर्वजन्म में जो कुछ किया था तुम उसी अद्भुत विचित्र चरित्र को सुनो, उस असुर ने पहले जन्म में मेरी अत्यन्त ही भक्ति की थी उसी के प्रभाव से इसने ऐसा उत्तम फल प्राप्त किया।

**पुराऽऽसीद्द्राविडे कश्चिद्राजा भागवतः कृती ॥**
**नाम्ना विश्वरथः ख्यातो हरेर्भजनवल्लभः ॥५५॥**

द्राविडराज्य में एक राजा थे, उनका नाम विश्वरथ था, वह जैसे भगवान् के भक्त और कृती थे वैसे ही हरि के भजन बल्लभ रूप में विख्यात हुए।

**बलवन्बन्धुसत्कर्त्ता विद्वान्भागवतः कृती ॥**
**तस्य राष्ट्रे प्रजाः सर्वा मम भक्तिपरायणाः ॥५६॥**

वह अपने बन्धुबान्धवों का अत्यन्त ही आदर सत्कार करने वाले, बलवान् विद्वान्, भगवद्भक्ति परायण, कृतज्ञ थे। उसके राज्य में सभी प्रजा भगवान् की भक्ति परायण थी।

**वसन्ति स्वसुखं सौख्यं यथोक्तकरदायिनः ॥**
**आधयो व्याधयश्चैव न भवन्ति कदाचन ॥५७॥**

प्रजाएँ यथोक्त कर देने वाली सुखसौख्यपूर्वक निवास करती थीं। कभी वहाँ आधि व्याधियाँ होती ही नही थीं।

**प्रतापान्मम भक्तस्य कालो ग्रासपराङ्मुखः ॥**
**अहर्निशं पुरे देशे भेरीदुन्दुभिनिस्वनैः ॥**
**निवेदयति लोकेभ्यो भजतालं प्रजा हरिम् ॥५८॥**

उस मेरे भक्त को ग्रास करने में, स्वयं काल भी पराङ्मुख हो गया था, उस राजा की नगरी और देश में दिन रात शंख और भेरी की ध्वनि होती रहती थी, और वह सर्वदा ही अपनी प्रजा के लोगों से यह कहता था कि हे प्रजागण ! तुम सभी भगवान् का पर्याप्त भजन करो।

**उद्धारं न च वै विद्धि लोकानां भजनं विना ॥**
**गतिः स परमा चैव आश्रयश्च ततः परम् ॥५९॥**

संसार का उद्धार बिना भजन किये नहीं होगा, तुम ऐसा समझो। क्यों कि वही परम सबकी गति और आश्रय देने वाले हैं।

**एवं प्रवर्त्तमाने वै नरदेवशिरोमणौ ॥**
**समाजः समभूत्क्वाऽपि कीर्त्तनातुरचेतसाम् ॥६० ॥**

राजाओं में शिरोमणि उस राजा के ऐसा करने पर एक अनिर्वचनीय हरि कीर्त्तन में आतुर चित्त वाला समाज निर्मित हुआ।

**तत्र कश्चिद्वैष्णवाग्र्यो ब्राह्मणो द्रष्टुमागतः ॥**
**स दृष्ट्वा कीर्त्तनं विप्रः चलितः स्वगृहं प्रति ॥६१ ॥**

वैष्णवों में प्रथम गिनने योग्य एक विप्र अभिलाषा से उनकी नगरी में आया, फिर वह वहाँ जाकर भगवत् कीर्तन को देखकर अपने घर को चला।

**एतस्मिन्समये चौराः कस्यचित्पुरवासिनः ॥**
**चोरयित्वा धनं भूरि चरितास्त इतस्ततः ॥६२ ॥**

इसी समय किसी नगर वासी के धन को हरण किये हुए कुछ चोर इधर उधर को भागे जा रहे थे।

**ज्ञात्वा राजभटास्तांश्च पुरपृष्ठेष्वनुद्रुताः ॥**
**चौराः केऽपि न लब्धास्तैर्दृष्टः स द्विजसत्तमः ॥६३ ॥**

राजा के दूत इस चरित्र को ज़ानकर उन चोरों को पकड़ने के लिए नगर से बाहर निकले परन्तु चोरों को किसी ने नहीं देखा, केवल यह ब्राह्मण दिखायी दिया।

**चोरोऽयमिति मत्वा तैर्गृहीतस्ताडितः पथि ॥**
**ततस्तैर्निर्दयैर्भृत्यैस्ताडितो बद्ध एव च ॥६४ ॥**

**कारागृहे निबद्धश्च रक्षितोऽतीव कष्टतः ॥**
**तस्यापि पूर्व्वजन्मोत्थकर्मपाकफलेन हि ॥६५ ॥**

उसे ही चोर समझ कर उन लोगों ने मिलकर पकड़ लिया और मार्ग में उसे पीटते हुए ले जाने लगे, फिर वे राजा के नौकर दयाशून्य होकर उसको मारते हुए कारागार को ले गये। उसे अत्यन्त कष्ट के साथ वहाँ रखा।पूर्व जन्म के कर्मों के फलों से ही।

**तर्ज्जितं राजभृत्यैर्यत्ताडनं बन्धनात्यये ॥**
**यमलोके स सङ्गाम्य ह्यसङ्ख्यैर्व्वत्सरैः स्थितः ॥६६ ॥**

राजा के नौकरों ने उसको बाँध कर जो तर्जन और ताडन दिया, यमराज के यहाँ रहने पर भी असंख्य वर्षों में प्राप्त होता है।

**तन्मेऽत्यनुग्रहात्तस्य जातं यत्स्वल्पदुःखदम् ॥**

**नाभुक्तं क्षीयते कर्म्म जन्मान्तरशतैरपि ॥६७॥**

मेरे अनुग्रह से किञ्चित् मात्र दुःख उसे हुआ। भोग के न होने से सैकड़ों जन्मों के कर्म भी क्षय नहीं होते।

**मद्भक्त्या तद्बहु स्वल्पं विपरीतमभक्तितः ॥**

**स कारागृहबद्धोऽपि न विषादं चकार ह ॥६८॥**

मेरे भक्ति से बड़ा दुःख स्वल्प में बदल जाता है। परन्तु अभक्ति से इसके विपरीत होता है अतः वह कारागार में रहकर भी कुछ दुःखित नहीं हुआ।

**गायन्मम यशोऽतीव विस्मितश्च स्मरन्मुहुः ॥**

**गतोऽहं कीर्त्तनं द्रष्टुं धृतश्चौरभ्रमाद्भटैः ॥६९॥**

**अहो बलवती विष्णोर्मायेयं सुखदुःखदा ॥**

**यदत्र कृतमेतर्हि तत्प्राप्तं कर्म्मणः फलम् ॥७०॥**

सर्वदा ही विस्मित हृदय हो बार-बार मेरा स्मरण और ध्यान करता मेरे यश को गाता हुआ इस प्रकार कहता था कि अहो! विष्णु भगवान् की माया कैसी बलवती है? यही संसार में सभी के सुख दुःख का अद्वितीय कारण है। मैं तो भगवत् कीर्तन को देखने जा रहा था, परन्तु राजा के नौकरों ने चोर समझकर मुझे पकड़ लिया, उन्होंने जो किया है वह मेरे कर्मों का फल है।

**नृणां सुखस्य दुःखस्य न दाता कोऽपि वर्त्तते ॥**

**इत्थं चिन्तयतस्तस्य रात्रिशेषः क्षयं गतः ॥७१॥**

कोई भी मनुष्य संसार में लोगों को सुख दुःख देने का कारण नहीं हो सकता इस प्रकार से विचार करते हुए वह शेष रात्रि व्यतीत हो गयी।

**प्रातस्ते नृपतिं प्रोचुः तेनाज्ञप्ताश्चरास्ततः ॥**

**ततो मारयितुं निन्युर्बद्ध्वा च द्विजसत्तमम् ॥७२॥**

इसके अनन्तर प्रातः उन सेवकों ने राजा से यह सब बतलाया और उनकी आज्ञा प्राप्त करके वे लोग उस ब्राह्मण को बाँधकर वध करने के लिए ले गये।

**पौराः खलु द्विजं रात्रौ धृतं चौरविशङ्कया ॥**
**अपश्यंस्तत्र ते गत्वा विष्णुभक्तं धृतं बलात् ॥७३ ॥**

इस ब्राह्मण को रात्रि में चोर समझकर पकड़ रखा है, वे सब पुरवासी लोग वहाँ देखने के लिए गये तो वहाँ जाकर देखा कि ब्राह्मण विष्णुभक्त है और बलात् पकड़ा गया है।

**ऊचुश्च किङ्करान् राज्ञो निगृहीतः कथं द्विजः ॥**
**चौरो नाऽयं विष्णुभक्तो जानीमः सर्व्वे एव हि ॥७४ ॥**

वे लोग राजा के नौकरों से कहने लगे कि तुमने किस लिए ब्राह्मण को पकड़ रखा है। यह चोर नहीं है साक्षात् विष्णु भगवान् का भक्त है इसको हम भली भांति जानते हैं।

**समाजोऽभूद्वैष्णवानां कीर्तनार्थं हरेर्निशि ॥**
**तत्र स्थितोऽसौ संहृष्टो वृत्ते प्रचलितो गृहम् ॥७५ ॥**

भगवान् के सङ्कीर्तन के लिए जो समाज स्थापित किया गया है, यह उसी में रात्रि के समय परम प्रीति युक्त हृदय से जाया करता था, जब भगवत् कथा समाप्त हो गयी तब वह अपने घर को लौटा।

**गच्छन्पथि धृतः साधुर्भवद्भिश्चौरबुद्धितः ॥**
**अस्य धर्म्मवतो राज्ञः कथं मेऽसदृशो नयः ॥७६ ॥**

जाते समय मार्ग में तुम लोग इसको चोर बुद्धि से पकड़ लाये, तुम्हारे राजा के स्वभाव के समान यह धर्मपरायण है, राजा की यह असमान नीति कैसे हुई।

**पीडनं तु द्विजे यत्र तत्र स्यात्सर्व्वसङ्क्षयः ॥**
**किं पुनर्म्मारणेऽप्यस्य शुभं राज्ञो भविष्यति ॥७७ ॥**

जिस स्थान पर ब्राह्मणों को दुःख दिया जाता है, वहाँ पर निश्चय ही सर्वनाश हो जाता है। वहाँ क्या इसको मारने से राजा का शुभ हो सकता है।

**मुच्यताम्मुच्यतामाशु न विप्रो वधमर्हति ॥**
**वपनं द्रविणादानं देशान्निःसारणं तथा ॥७८ ॥**

तुम शीघ्र ही इसको छोड़ दो, छोड़ दो, यह ब्राह्मण किसी अवस्था में भी वध करने योग्य नहीं है, अपितु, सिर मुड़ा देना, धन का आदान तथा देश से निःसारण ही ब्राह्मणों को देने योग्य दण्ड है।

**एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥**
**ब्रह्मबन्धुर्न हन्तव्य आततायिविवर्जितः ॥७९ ॥**

अपराधी ब्राह्मणों को अन्य किसी प्रकार का शारीरिक दण्ड नहीं देना चाहिए, आततायी को छोड़कर ब्राह्मण बन्धुओं का वध नहीं करना चाहिए।

**तथा भवद्भिर्विधृतश्चास्य दोषो न कश्चन ॥**
**इति श्रुत्वा राजभृत्यो राज्ञे तद्वन्न्यवेदयत् ॥८० ॥**

तुम इसे न जानकर ही पकड़ ले आये हो अतः तुम्हारा इसमें कुछ भी दोष नहीं है। राजा के नौकर द्वारपालों के वचन को सुनकर उसी समय राजा के पास गये, और राजा से जाकर इसका समस्त वृत्तान्त निवेदन किया।

**राजन्नसौ महाभागः परस्वेषु पराङ्मुखः ॥**
**वैष्णवो रक्षितः स्वामिन्बद्ध्वा कारागृहे निशि ॥८१ ॥**

हे राजन् ! यह ब्राह्मण अत्यन्त ही भाग्यवान् है यह दूसरे की वस्तु लेने में भी कभी इच्छा नहीं करता, यह स्वभाव से ही विष्णु भगवान् का भक्त है, हे स्वामिन इसको न जानकर ही हमने पकड़कर एक रात्रि भर कारागार में रखा है।

**न दण्ड्याश्च वयं राजंस्तवादेशातिवर्त्तिनः ॥**
**बिभीमश्चौरदण्डेन तद्देयमभयं नृप ॥८२ ॥**

हे राजन् ! आपके आदेश का अतिवर्तन करने वाले हम दण्ड देने के योग्य नहीं हैं, हमें और दण्ड से भी अत्यन्त भय लग रहा है इस कारण आप अभय दान दीजिए।

**अतः परन्तु किं कुर्म्मो हन्मो वा रक्षयामहे ॥**
**इत्थं निशम्य भीतस्तु तानुवाच महामतिः ॥८३ ॥**

इसके बाद अब हमको क्या करना होगा ? इसका वध करे अथवा इसकी रक्षा करे इस प्रकार नौकरों की यह वार्ता सुनकर बुद्धिमान् राजा भयभीत होकर उन सभी से कहने लगा।

**विक्रुश्य कृष्ण कृष्णेति ममागः प्रशमः कथम् ॥**
**आनयध्वं ममादेशाद्धृशं भृत्या हरेः प्रियम् ॥८४ ॥**

हे कृष्ण ! यह मेरा अपराध कैसे शान्त हो इस प्रकार क्रोधित होकर कहा हे सेवकों ! तुम उस विष्णु प्रिय ब्राह्मण को मेरे समीप ले आओ।

**विष्णुरेव पुण्यनामा ख्यातः पतितपावनः ॥**

**इत्याज्ञाता राजभृत्या विष्णुभक्तमथानयन् ॥८५॥**

यह पतितपावन, ख्यात, पुण्य नाम वाला विष्णु ही है, ऐसी राजा की आज्ञानुसार उसी समय उस विष्णु भक्त ब्राह्मण को राजा के सेवक ले आये।

**दृष्ट्वाऽऽयान्तं नृपश्रेष्ठो ननाम शिरसा भुवि ॥**

**तमुवाच मुनिश्रेष्ठं जहि मां पापकारिणम् ॥८६॥**

ब्राह्मण को आता देखकर राजा ने भक्तिपूर्वक अपने मस्तक को पृथ्वी पर झुकाकर प्रणाम किया, फिर उस मुनि श्रेष्ठ से कहने लगे कि आप मुझ पापकारी को दण्ड दो।

**अथोपदेशं श्रुत्वा च प्रायश्चित्तं भविष्यति ॥**

**कथं मम भवेन्मोक्षो वैष्णवाच्च विधानतः ॥८७॥**

तत्पश्चात् उपदेश सुनकर प्रायश्चित करूँगा किस प्रकार से मेरे इस महापाप का प्रायश्चित होगा और किस प्रकार से वैष्णव धर्म के विधान से मुझे मुक्ति प्राप्त होगी।

**विष्णुभक्तकृतं द्रोहं निराकर्त्तुं न शक्नुयात् ॥**

**जनो जन्म शतोद्भूतैः सुकृतैर्व्विविधैरपि ॥८८॥**

विष्णु भक्तों के विरुद्ध आचरण का निराकरण सैकड़ों जन्म जन्मान्तरों के किये हुए विविध पुण्यों के द्वारा भी व्यक्ति नहीं कर सकता है।

**मया यत्क्रियते पापं पारावारो न तस्य हि ॥**

**अतस्त्राहि कृपासिन्धो त्वामहं शरणं गतः ॥८९॥**

मेरे द्वारा जो पाप किये गये हैं। उनकी सीमा नहीं है, अतः हे कृपासिन्धों ! मैं तुम्हारी शरणागत हूँ आप मेरी रक्षा कीजिए।

**किमत्र विहितं ब्रह्मन्ममानृण्यमनुत्तमम् ॥**

**यत्कृत्वाऽहं तमो घोरं न गच्छेयं कदाचन ॥९०॥**

हे ब्रह्मन् ! अब मुझे क्या करना चाहिए वह आप कहिए, जिसको करने से मुझे घोर अन्धकार में न जाना पड़े।

**इति राज्ञो वचः श्रुत्वा प्रोवाच द्विजसत्तमः ॥**

**श्रुतिस्मृतिपुराणोक्तं वैष्णवद्रोहमुल्बणम् ॥९१॥**

राजा के ऐसे वचनों को श्रवण कर वह ब्राह्मणों में श्रेष्ठ ब्राह्मण बोला कि श्रुति स्मृति और पुराणों में लिखा है कि विष्णु के भक्त से विद्रोह करने वाले को महापाप होता हे।

**न शक्यते वारयितुं कल्पकोटिशतैरपि ॥**

**स इत्थमुक्त्वा राजानं गतो विप्रः स्वमालयम् ॥९२॥**

करोड़ों कल्पों तक चेष्टा करने पर भी उस पाप का निवारण नहीं होता राजा से वह ब्राह्मण यह कहकर अपने स्थान को चला गया।

**देहमुत्सृज्य राजाऽभूत्तृणावर्त्तो महासुरः ॥९३॥**

उस राजा ने अपने शरीर को त्यागकर महासुर तृणावर्त रूप से जन्म ग्रहण किया।

**हतो मयाऽत्र विपिने गतः स परमं पदम् ॥९४॥**

और फिर मुझसे ही मृत्यु को पाकर परम पद का अधिकारी हुआ।

**तृणावर्त्तवधं श्रुत्वा कंसोऽमन्यत चाशुभम् ॥**

**स्वप्नदृष्टं भवेत्सत्यं यथायं निहतोऽसुरः ॥९५॥**

तृणावर्त के मरने के वृतान्त को सुनकर कंस अपने मन में अशुभ मानने लगा, कि जिस प्रकार तृणावर्त मर गया, तब स्वप्न में जो कुछ भी देखा है उनके सत्य होने में सन्देह नहीं।

**पार्षदाश्च हरेर्लोके चरन्ति च्छन्नरूपिणः ॥**

**बालं नीत्वा यदा व्योम्नि स्थितस्तैर्निहतो ध्रुवम् ॥९६॥**

भगवान् के सम्पूर्ण पार्षद अवश्य ही गुप्त रूप से इस लोक में विचरण करते हैं, तृणावर्त जिस समय उस बालक को लेकर आकाश में स्थित हुआ तो उसी समय इन सम्पूर्ण पार्षदों ने उसको मार डाला।

**अतोऽन्यथा बालकतो मृतिः कथं भवेदमुष्यामितविक्रमस्य ॥**

**स्वर्गेऽपि विख्यातगतेर्महाऽद्भुतं सम्यग्विचार्य्याहमतो विधास्ये ॥९७॥**

यदि ऐसा न हुआ होता तो इस अमित पराक्रमी दैत्य की मृत्यु बालक से कैसे होती। स्वर्ग में भी विख्यात गति वाले ऐसे अद्भुत दैत्य के विषय में सम्यक् विचार करके कुछ करूँगा।

***इति श्री सकलपुराणसारभूते आद्युपपुराणे वैयासिके नारदशौनसंवादे तृणावर्त्तवधो नाम विंशोऽध्यायः ॥२०॥***

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में तृणावर्त्तवध नामक बीसवाँ अध्याय समाप्त ॥२०॥*

# एकविंशोऽध्यायः

*श्रीकृष्ण उवाच*

**श्रुत्वा तृणावर्तवधं कंसोऽभूदतिदुर्म्मनाः ॥**
**समाहूय भृत्यवर्गानब्रवीत्तान्सुरद्विषः ॥१॥**

श्री कृष्ण बोले कि तृणावर्त के मारने का समाचार सुनकर कंस अत्यन्त दुःखित हुआ, और देवताओं के बैरी अपने बान्धवों को उसी समय बुलाकर उनसे कहने लगा।

**यूयं मम प्रियाः सर्वे तथा चातिहितैषिणः ॥**
**गत्वा तत्र तृणावर्त्तवधो निश्चीयतामिति ॥२॥**

तुम सभी हमारे प्रिय हो और सभी लोग हमारे हितकारी हो, इस कारण तुम सब लोग इसी समय वहाँ जाकर तृणावर्त की मृत्यु के समाचार को सुनिश्चित करो।

**कथं मृतो हतः केन कुत्र वा पतितोऽभवत् ॥**
**दृष्ट्वा व्रजौकसो लोकान्समागच्छत मा चिरम् ॥३॥**

उसकी मृत्यु किस प्रकार हुई, और किस मनुष्य ने उसको मारा? किस स्थान में उसकी मृत्यु हुई? इन सभी बातों को जानकर समस्त व्रजवासियों को देखकर शीघ्र आ जाओ।

**ते यथार्थं वदिष्यन्ति विधेयन्तु समाहितम् ॥**
**तथेत्युक्त्वा व्रजं सर्वे समागत्य व्रजौकसः ॥४॥**
**अपृच्छंस्तेऽब्रुवंस्तेभ्यस्तृणावर्तो यथा गतः ॥**
**वात्यारूपधरो दुष्टो धृत्वा बालं गतो नभः ॥५॥**

व्रजवासी लोग सभी यथार्थ कह देंगे, वे समाहित विधेय को भी बतला देंगे, बांधवगण जो आज्ञा कहकर उसी समय व्रज में आये और वहाँ जाकर व्रजवासियों से पूछने लगे कि तृणावर्त की मृत्यु किस प्रकार हुई।

व्रजवासी उनसे तृणावर्त की मृत्यु का समाचार सत्य-सत्य कहने लगे, कि वह महासुर तृणावर्त वायुरूप को धारण करके बालक को लेकर आकाश में उड़ा।

**क्षणादकस्मात्पतितो बालकेन सहैव तु ॥**

**विशीर्णसर्वावयवो ममाराश्मनि पातितः ॥६॥**

क्षण भर में अकस्मात् उस बालक के साथ शिला के ऊपर गिरने से उसका शरीर चूर्ण-चूर्ण हो गया और उसी समय वह मर गया।

**को वेद केन निहतः कथं वा पतितः क्षितौ ॥**

**बालको नन्दपुण्येन मृत्योर्नहि वशं गतः ॥७॥**

कौन जानता है कि किसने किस प्रकार से उसको मारा और कैसे वह शिला के ऊपर गिरा, हम लोग केवल इतना ही कह सकते हैं, कि महाभाग नन्दजी के पुण्य से उनका बालक मृत्यु के वश्य नहीं हुआ।

**एवं निशम्य कंसाय प्रोच्य जग्मुः स्वमालयम् ॥**

**कंसो मेने तस्य वधो दुःस्वप्नादभवद्ध्रुवम् ॥८॥**

वह सब इस वृतान्त को सुनकर समाचार कहकर अपने घरों को चले गये, कंस विचारने लगा कि बुरे स्वप्नों के देखने से ही तृणावर्त की मृत्यु इस प्रकार से हुई है यह निश्चय है।

**विधात्रा विहितं मृत्युं कोऽपमार्ष्टुं क्षमो भवेत् ॥**

**व्रजे तु साधवो गोपा निवसन्ति च वेद्म्यहम् ॥९॥**

विधाता ने स्वयं ही उसकी मृत्यु का विधान किया है, उसको कौन दूर कर सकता है। व्रज मण्डल में जितने मनुष्य वास करते हैं, वे सभी साधु हैं। ऐसा मैं जानता हूँ।

**तेषां न दोषश्चास्तीह कालग्रस्तो मृतोऽसुरः ॥**

**अत्र शोको न कर्तव्यो मृत्युर्नोल्लङ्घ्यते क्वचित् ॥१०॥**

इस कारण इस विषय में उनका कुछ भी दोष नहीं है, महासुर तृणावर्त निश्चय ही काल से ग्रस्त होकर मरा है, अतः यहाँ उसका शोक करना उचित नहीं, मृत्यु का उल्लंघन कोई नहीं कर सकता।

**घटोदरो बकाद्या यदा यास्यन्ति ते गृहान् ॥**

**तदा विचारः कर्तव्यो हिताहितविधौ स्वके ॥**

**विचार्यैवं तदा कंसः स्वगेहमविशद्द्रुतम् ॥११॥**

घटोदर और बकासुर इत्यादि जब यह अपने-अपने घरों को आयेंगे उस समय अपने हित-अहित का विचार किया जायेगा, कंस ने उसी समय यह सोच करके अतिशीघ्रता से अपने घर में प्रवेश किया।

*श्रीनारद उवाच*

**तृणावर्तवधात्कृष्ण किमकार्षीर्महाप्रभो ॥**
**तव लीलाकथा श्रोतुर्मनसोऽत्र सुखप्रदा ॥१२॥**

श्रीनारद जी बोले कि हे श्रीकृष्ण! महा प्रभु। तृणावर्त के मारने के बाद आपने क्या किया? आपकी लीला, कथा सुनने वाले के मन को सुख प्रदान करने वाली है।

**त्वत्कीर्त्तनं फलं वाचां त्वद्गुणश्रवणं श्रुतेः ॥**
**नेत्रयोस्तव सन्दर्शस्त्वद्भक्तानाञ्च दर्शनम् ॥१३॥**
**पादयोर्व्रजनं तद्वत्तव तीर्थमहोत्सवे ॥**
**नासिकायास्तवोत्तीर्णतुलसीगन्धसेवनम् ॥१४॥**

आपकी लीला कथा कीर्तन यह वाणी का साक्षात् फल है, आपके गुण को सुनना कानों का फल है। आपका दर्शन तथा भक्तों का दर्शन ही दृष्टि की सफलता है, तीर्थमहोत्सव में गमन ही चरणों का फल है तथा आपको निवेदन की हुई तुलसी की सुगंधि के सेवन करते ही नासिका सफल हो जाती है।

**अज्ञानां तव पादाब्जजलसेकोऽखिलं फलम् ॥**
**अन्यथा निष्फलं सर्वं तव प्रेमविवर्जितम् ॥१५॥**

कुछ न जानने वाले अज्ञों के लिए आपके चरणाविन्द के चरणोदक के सचेन से ही अखिल फल प्राप्त होता है और जो आपके प्रेम से रहित हैं वे सभी निष्फल हैं।

**देहगेहादिकं व्यर्थं श्मशानसदृशं खलु ॥**
**दुर्लभं मानुषं जन्म सत्सङ्गस्त्वतिदुर्लभः ॥१६॥**

देह और यह घर सम्पूर्ण ही श्मशान के समान व्यर्थ होते हैं। मनुष्य जन्म ही दुर्लभ है, फिर उसको पाकर सत्सङ्गति होना अत्यन्त कठिन है।

**त्वत्कथाश्रवणं सद्भिस्तत्र वाप्यतिदुर्लभम् ।।**
**वक्तारो बहवः सन्ति परेषां वृद्धिदा भुवि ।।१७ ।।**

सज्जनों के द्वारा आपकी कथा का सुनना अत्यन्त ही दुर्लभ है पृथ्वी पर दूसरों की वृद्धि देने वाले ऐसे वक्ता बहुत से हैं।

**दामोदरवशो भक्तो दुर्लभः खलु भूतले ।।**
**त्वमेव कृष्ण सर्वज्ञ त्वं मे ब्रूहि दयानिधे ।।१८ ।।**

श्रीकृष्ण के वश में रहने वाले भक्त पृथ्वी पर दुर्लभ हैं। हे श्री कृष्ण! हे सर्वज्ञ! हे दयानिधे! आप ही मुझसे बतलाइये।

*श्रीभगवानुवाच*

**धन्योऽसि त्वं मुनिश्रेष्ठ मत्कथाश्रवणे रतः ।।**
**अतस्तेऽहं प्रवक्ष्यामि शृणुष्वावहितो मम ।।१९ ।।**

श्री भगवान् बोले कि हे मुनिश्रेष्ठ! तुम धन्य हो मेरे चरित्रों के सुनने में तुमको अत्यन्त प्रेम उत्पन्न हुआ है इस कारण मैं तुमसे कहता हूँ तुम सावधान होकर मेरी लीलाओं को सुनो।

**कंसः स भावनाविष्टः सुप्तश्च कशिपौ शुभे ।।**
**चिन्तयामास किं कार्यं मया स्वहितसिद्धये ।।२० ।।**

कंस अत्यन्त ही भावनात्मक होकर सुन्दर शय्या के ऊपर लेटा हुआ विचारने लगा कि अपने हित के लिए मुझे क्या करना उचित है।

**सस्मार वचनं तस्या हता सा कन्यका मया ।।**
**तया यदुक्तं भो मन्द किं मया हतया बत ।।२१ ।।**

जिस समय उस कन्या को मारा था उस समय कंस को उसके वचन स्मृत होने लगे। उस कन्या ने जो कहा था कि, रे मूढ़! मेरे मारने से तुझे क्या होगा।

**यत्र क्व वा समुत्पन्नो यस्त्वां मारयिता ध्रुवम् ।।२२ ।।**

तुम्हें जो मारेगा वह निश्चय ही कहीं जन्म ले चुका है।

*नारद उवाच*

**किं जातं किं कृतं तेन कंसेनात्महितेच्छुना ।।२३ ।।**

श्रीनारद जी बोले कि कंस ने अपने हित साधन के निमित्त क्या-क्या किया था और क्या हुआ।

*श्रीकृष्ण उवाच*

**मुने कन्यां गृहीत्वा स निशीथे स्वगृहं गतः ॥**
**वसुदेवस्तथैवासीद्बद्धः शृङ्खलयाऽभवत् ॥२४॥**

श्रीकृष्ण बोले कि हे मुने! वसुदेव जी उस कन्या को लेकर अर्द्ध रात्रि के समय अपने घर में आये, और फिर आकर पहले के समान बेड़ी हथकड़ी आदि को पहनकर रहने लगे।

**ततो रूरोद सा कन्या स्वरेणोच्चैर्निशम्य तत् ॥**
**समुत्थिता द्वारपालाः कंसेनैव नियोजिताः ॥२५॥**

वह कन्या ऊँचे स्वर से रोने लगी, उसको सुनकर कंस के सभी नौकर जो कि इस कार्य के लिए नियत थे वे सभी जाग उठे।

**शीघ्रं कंसभिया गत्वा तदुत्पत्तिञ्चचक्षिरे ॥**
**कंसः श्रुत्वा खड्गपाणिः सहसा समुपस्थितः ॥२६॥**

कंस के डर से कंस के समीप जाकर कन्या के जन्म को बतलाया; कंस सुनते ही खड्ग हाथ में लेकर सहसा उठ खड़ा हुआ।

**त्यक्त्वा तु शयने मूढः सुप्तां पत्नीं समाययौ ॥**
**त्वरया धावमानोऽसौ स्खलितो न्यपतद्भुवि ॥२७॥**

वह मूढ कंस अपनी सोती हुई स्त्री को शयन पर छोड़ कर शीघ्रता से दौड़ता हुआ आया और बीच में पृथ्वी पर गिर पड़ा।

**शिरसः पतितं दूरमुष्णीषमसुरस्य हि ॥**
**तथाऽधरोष्ठभङ्गेन रक्तस्रावस्ततोऽभवत् ॥२८॥**

असुर की पगड़ी सिर से दूर गिरी। अधर तथा ओठ के कट जाने से रक्त स्राव होने लगा।

**तथापि मार्गयन्गत्वा जगृहे कन्यकाञ्च ताम् ॥**
**देवकी विनयेनोच्चैर्निर्जगाद तमग्रजम् ॥२९॥**

तथापि वह ढूढ़ता हुआ जाकर देवकी से उस कन्या को ले लिया। तब देवकी अत्यन्त विनय करती हुयी ऊँचे स्वर से अपने भाई कंस से कहने लगी।

**भ्रातस्तवानुजाहं वै कृपापात्रं दयानिधे ।।**

**हता मे बहवः पुत्राः कन्यकैका प्रदीयताम् ।।३० ।।**

हे भ्रातः ! दयानिधे ! मैं भी तुम्हारी भगिनी हूँ, स्वभाव से ही कृपायुक्त हूँ। तुमने प्रथम मेरे बहुत से पुत्र मार डाले हैं इस कारण मेरी इस कन्या को तो कृपा करके दे दीजिए।

**निर्भर्त्स्य भगिनीं कंसो हस्तादाच्छिद्य कन्यकाम् ।।**

**प्रोवाचेयं निहन्तव्या मुच्यतामिति मा वद ।।३१ ।।**

कंस ने अपनी बहन देवकी को फटकार करके उससे कन्या को छीन लिया, और फिर बोला कि यह अवश्य मारने योग्य है। छोड़ दो ऐसा मत बोल।

**तव गर्भसमुद्भूताष्टमापत्येन मे वधः ।।**

**इत्युक्त्वा तां समादाय पद्भ्यामुत्थाय निर्दयः ।।३२ ।।**

तुम्हारे आठवे गर्भ से जो पुत्र उत्पन्न होगा, उसी से मेरी मृत्यु होगी, ऐसा कहकर वह निर्दयी कंस बलपूर्वक उस कन्या को लेकर उसके दोनों चरणों को उठाकर।

**यावत्प्रक्षेप्तुकामोऽभूच्छिलापृष्ठे स दुर्मतिः ।।**

**तावद्धस्ताद्विनिर्गत्य सा देव्यम्बरमास्थिता ।।३३ ।।**

उस दुबुर्द्धि ने उसको पृथ्वी पर पटकना चाहा कि उसी अवसर पर वह कन्या इसके हाथ से छूटकर सुन्दर मोहिनी देवी का स्वरूप धारण कर आकाश में स्थित हो गयी।

**बभूव दर्शनीयाङ्गी सायुधाष्टमहाभुजा ।।**

**यया सम्मोहितं विश्वं देहगेहसुतादिषु ।।३४ ।।**

वह दर्शनीय अङ्गों वाली, आयुध धारण किये हुए और आठ भुजाओं से युक्त हो गयी। जिसके द्वारा संसार, शरीर, गृह तथा सुतादि में मोहित होता है।

**कुतस्त्वेहमथो याति भोक्तुं नरकयातनाः ।।**

**संस्तूयमाना देवौघैः सा प्रोवाच महाशठम् ।।३५ ।।**

**कंसमत्युच्चया वाचा समाभाष्य नराधमम् ।।**

**किं मया हतया मन्द किं कार्यमभवत्तव ।।३६ ।।**

नरक की यातनाएं भोग करने के लिए स्नेह कहाँ से प्राप्त करता है। वह आकाश में गयी तब देवता ऊँचे स्वर से उसकी स्तुति करने लगे, तब उस महामूर्ख कंस से इस प्रकार ऊँचे स्वर से कहने लगी कि मुझे मारने से मूर्ख ! तेरा क्या कार्य होगा।

**यत्र क्वचित्पूर्वशत्रुर्जातः खलु तवान्तकृत्॥**

**इत्युक्त्वान्तर्हिता सद्यस्ततः कंसोऽतिविस्मयः ॥३७॥**

तेरा वह पूर्व बैरी जो कि मुझे मारेगा कहीं जन्म ले चुका है, यह कहकर वह कन्या उसी समय अन्तर्ध्यान हो गयी, यह देखकर कंस को बड़ा आश्चर्य हुआ।

**देवकीं वसुदेवञ्च गत्वा पाप उवाच ह॥**

**वसुदेव महाबुद्धे श्रृणु देवकि मे वचः ॥३८॥**

इसके बाद वह दुरात्मा कंस देवकी और वसुदेव के पास जाकर बोला कि हे बुद्धिमान् वसुदेव! हे परम बुद्धिमती देवकी! तुम दोनों भी मेरे वचनों को श्रवण करो।

**साधू युवां सुखं दातुमुचितौ दुःखितौ मया॥**

**अनृतं केवलं मर्त्त्यो वदेदिति विनिश्चयः ॥३९॥**

तुमको सुख देना सब प्रकार से मुझे उचित है, परन्तु वह मैंने न किया यह कहकर वह बड़ा दुःखित हुआ और बोला कि मनुष्य इस संसार में मिथ्या है यह तुम निश्चय समझो।

**देवताप्यनृतं वक्ति किं करोमि प्रतारितः॥**

**यद्विश्रम्भादहं मूढो हतवांश्च शिशूंस्तव ॥४०॥**

देवताओं ने भी मिथ्या कहा था अब मैं क्या करूँ मैं सब प्रकार से छला गया, जिसके विश्वास पर तुम्हारे सम्पूर्ण बालकों की हत्या की।

**महापापस्य मे घोर भवित्री गतिरुल्बणा॥**

**वसुदेवापराधो मे क्षन्तब्यः साधुबुद्धिना ॥४१॥**

इस पाप के फल से मुझे अत्यन्त दुर्गति प्राप्त होगी, इसमें कुछ भी सन्देह नहीं है वसुदेव! तुम साधुबुद्धि हो इसलिए मेरे इन अपराधों को तुम क्षमा करो।

**न साधुर्दूषणं पश्येद्गुणदृष्टिरनुत्तमः॥**

**साधूनां समचित्तानाममित्रोदास्तविद्विषाम् ॥४२॥**

साधु लोग स्वभाव से ही गुणदर्शी और सब प्रकार से सरल चित्त वाले होते हैं, वे कभी किसी के दोषों को नहीं देखते। तुम्हारे समान साधुओं के चित्त की वृत्ति शत्रु, मित्र तथा उदासीन सभी में एक जैसी होती है।

**प्रसादः सर्वदा तेषामघकारिष्वपि स्फुटम् ।।**

**भगिनीत्थं त्वया दुःखं न कर्तव्यं कदाचन ।।४३ ।।**

पाप करने वालों पर उन साधुओं की कृपा (प्रसाद) सर्वदा रहता है। अतः हे बहन! अब तुम किसी प्रकार का भी दुःख मत करो।

**मृताः पुत्रास्तव शुभे को लङ्घेदन्तकं नरः ।।**

**गर्भाविष्टं जायमानं बालं यौवनसंस्थितम् ।।**

**वृद्धञ्च मानवङ्कालो ग्रसत्येव न संशयः ।।४४ ।।**

हे शुभे! तुम्हारे पुत्र मारे गये हैं यमराज का उल्लङ्घन कौन कर सकता है। जो मनुष्य इस समय गर्भ में है और जो उत्पन्न हुआ है और जो यौवन अवस्था में है या जो वृद्ध है काल उन सभी को ग्रस लेता है इसमें कुछ भी सन्देह नहीं।

**इत्थं ज्ञात्वा नैव शोकः कर्तव्यो ज्ञानिभिर्नरैः ।।**

**धात्रा विनिर्मितं कर्मफलं मार्ष्टुं क ईश्वरः ।।४५ ।।**

जो लोग ज्ञानवान् है वह पहले कहे हुए के अनुसार जान करके भी शोक नहीं करते, विधाता ने जो कर्म फल निर्मित किया है उसे मिटाने में कोई समर्थ नहीं है।

*श्रीश्वर उवाच*

**एवं श्रुत्वा कंसवाक्यं वसुदेवोऽथ देवकी ।।**

**कंसमाभाष्य वचनं सुप्रसन्नौ बभूवतुः ।।४६ ।।**

श्री भगवान् बोले कि जब कंस के इस प्रकार के वचन सुनकर वसुदेव और देवकी प्रसन्नमूर्ति होकर उससे कहने लगे।

**कंस नात्रापराधस्ते यद्भाव्यमभवत्खलु ।।**

**त्वयैवोक्तं विधातुर्हि विधानं कोऽतिलङ्घयेत् ।।४७ ।।**

हे कंस! इसमें तुम्हारा कुछ भी अपराध नहीं है होनहार को रोकना कठिन है इस कारण जो होना था वही हुआ है तुम्हीं कहते हो कि विधाता जो करता है उसको कोई नहीं रोक सकता।

**धात्रा दत्तं कर्मफलं भोक्तव्यं सर्वदेहिनाम् ।।**

**नान्योऽन्यदुःखं भुङ्क्तेऽत्र स्वयमेव हि सृज्यते ।।४८ ।।**

हे कृष्ण !तुमने समस्त पदार्थ नष्ट कर दिये यह अच्छा किया है यशोदा जी किसी की भी बात का विश्वास नहीं करती थीं।

**यावन्न लभते दुःखमात्मनो मानवः क्वचित्॥**
**तावदन्यस्य दुःखेन प्रतीतिं नाधिगच्छति॥ ३२॥**

मनुष्य को जब तक कभी स्वयं दुःख नहीं होता तब तक ही वह दूसरों के दुःख से विश्वास प्राप्त नहीं करता है।

***श्रीकृष्ण उवाच***

**इति तासां वचः श्रुत्वा तदा सा जननी मम॥**
**आक्रुश्य बहुधा भूयो मां ग्रहीतुं समुद्यता॥ ३३॥**

श्रीकृष्ण जी बोले कि उनके इस प्रकार के वचन सुनकर बार-बार मेरे ऊपर क्रोध करके मेरी जननी मुझे पकड़ने के लिए तैयार हुईं।

**अहं साक्षेपवचनै रुष्टो गेहाद्बहिर्गतः॥**
**सा मामनुजगामाऽथ गोप्यश्च स्म गृहान्ययुः॥३४॥**

तब मैं उनके इस प्रकार के आक्षेपदायक वचनों से रुष्ट होकर घर से बाहर चला गया, वह भी मेरे पकड़ने के लिए चली और समस्त गोपियाँ अपने-अपने घरों को चलीं गयी।

**मया विचारितं सा मां त्यक्त्वाभूद्देवपूजने॥**
**मतिर्भविष्यति ततो वस्तु तत्र न रक्षितम्॥ ३५॥**

मैं विचार करने लगा कि मुझे त्याग करके देवताओं की पूजा करने में माता की बुद्धि रहेगी इसी कारण मैंने किसी वस्तु की रक्षा नहीं की।

**व्यभिचारपरो धर्म्मो न मे तोषाय कल्पते॥**
**यावन्मे पूजनं नास्ति तावद्देवान्न वै यजेत्॥ ३६॥**

व्यभिचार परक धर्म मुझे सन्तोष नहीं देता है। जब तक मेरी पूजा न हो, तब तक अन्य देवताओं की पूजा न करे।

**मयि प्रपूजिते देवाः पितरश्चैव पूजिताः॥**
**यथा सिक्ते वृक्षमूले पत्रशाखादिसेचनम्॥ ३७॥**

मेरी पूजा करने पर सम्पूर्ण देवता और पितरों की पूजा हो जाती है, वृक्ष की जड़ में जल डालने से जिस प्रकार सम्पूर्ण पत्र शाखा आदि सींच जाते हैं।

**तथा मे पूजने जाते सर्व्वेषां पूजनं भवेत्॥**
**न भक्ता भक्तिमन्तोऽपि येऽन्यदेवार्च्चने रताः॥ ३८॥**

उसी प्रकार मेरी पूजा करने से ही सबकी पूजा हो जाती है और जो लोग मुझे छोड़ करके अन्य देवताओं की पूजा करते हैं वे भक्तिमान् होने पर पर भी भक्त नहीं हो सकते।

**यथा स्त्री कुलटा मूढा न याति पतिलोकताम्॥**
**योऽनन्यभक्त्या मां नित्यं भजेत मनुजो मुने॥ ३९॥**

कुलटा तथा मूढ स्त्री जिस प्रकार से पति के लोक को पाने में समर्थ नहीं होती, हे मुने ! जो मनुष्य अनन्य भक्ति के साथ मेरी नित्य पूजा करते हैं।

**तस्याधीनोऽस्मि सततं नैवान्यत्र व्रजे क्वचित्॥**
**अनन्यभक्तिसदृशं नान्यत्प्रियतमं मम॥ ४०॥**

मैं उनके निरन्तर अधीन रहता हूँ और कहीं भी नहीं जाता। अनन्य भक्ति के समान अन्य कोई मेरा प्रियतम साधन नही है।

**भजन्तोऽनन्यभक्ताश्च सर्व्वे तेऽव्यभिचारिणः॥**
**इत्याशयाद्यशोदायाः कृता विप्रगृहे स्थितिः॥ ४१॥**

जो लोग अनन्य भक्ति के साथ मेरा भजन करते है वे सभी अव्यभिचार परायण है, इसी अभिप्राय से मैं यशोदा जी के विप्रगृह में रहता हूँ।

**अन्यासामपि गोपीनां यद्भुक्तं तद्गृहे गृहे॥**
**ता मद्भक्ताश्च मामेव मोहिता नार्च्चयन्ति हि॥ ४२॥**

मैं अन्य गोपियों के घर में जाकर भोजन करता हूँ उसका कारण यह है कि वे सभी मेरी भक्त है वे मोहित होकर मेरी पूजा नहीं करती।

**ताश्चात्मलीलावृद्ध्यर्थं मोहिता नान्यथा मुने॥**
**यदि सर्व्वेऽन्यथा भावा भवेयुर्व्रजवासिनः॥ ४३॥**

हे मुने ! मैंने अपनी लीला को बढ़ाने के लिए ही उनको मोहित कर दिया है जिससे सभी ब्रजवासी अन्यथा भाव वाले हो जायँ।

**तदा लीलाविवृद्धिश्च न सम्यग्जायते व्रजे ॥**
**मत्कर्म्मभिर्मत्स्नेहेन मयि तेषां स्थितं मनः ॥ ४४ ॥**

तब फिर ब्रज में भली प्रकार से मेरी लीला की वृद्धि न होगी मेरे कर्मो तथा मेरे स्नेह से उनका मन मुझमें स्थित हो गया है।गुणानुवाद और मेरा स्नेह इन दोनों ही उपायों से उनका मन मुझमें फंस रहा है।

**ततोऽप्यनन्यभावस्तु न तेषां क्वापि हीयते ॥**
**एकदा च गता माता मोहिता मम मायया ॥४५ ॥**

इस निमित्त किसी प्रकार से भी उनकी अनन्य भाव में हीनता नहीं है। एक बार मेरी माता मेरी माया से मोहित हो गयीं।

**त्यक्त्वा क्रोधं पुत्र पुत्र गच्छ मा गच्छ माऽब्रवीत् ॥**
**मयोक्तं नैव ते गेहे आयास्यामि कथञ्चन ॥ ४६ ॥**

क्रोध को छोड़कर मुझसे बोली कि हे पुत्र ! हे पुत्र ! मत जाओ। आओ-आओ मैं बोला कि मैं तुम्हारे घर कभी नहीं आऊँगा।

**देवपूजाकुलायास्ते मया किं कार्य्यमस्ति वै ॥**
**न तथा वर्त्तते प्रेम क्षुधिते तृषिते मयि ॥ ४७ ॥**

अन्य देवताओं की पूजा में व्यस्त रहने वाली से मेरा क्या प्रयोजन है, मेरे भूखा और प्यासा होने पर भी आप पहले के समान मुझसे प्रेम नहीं करतीं।

**देवेतररतायास्ते नाहं यामि गृहान्तरम् ॥**
**इत्युक्त्वाऽहं रुदंस्तत्र स्थितः सा भीषयत्तदा ॥ ४८ ॥**

तुम अन्य देवताओं की पूजा में रत रहती हो इस कारण मैं आपके घर नहीं आऊँगा। यह कहकर मैं रोता वहाँ ही बैठ गया, तब वह मुझे भय दिखा कर बोली।

**तत्रैव मर्कटः क्रोधी रुदन्तमनुधावति ॥**
**आगत्य नासिकाकर्णौ लुनात्येव न संशयः ॥ ४९ ॥**

यही क्रोधी बन्दर रोते हुए तुम्हारे पीछे दौड़ेगा और वह बन्दर आकर तुम्हारा नाक कान काट लेगा इसमें सन्देह नहीं है।

**अत उद्गृह्य शीघ्रं हि प्रविशामो गृहं सुत ॥**
**इति तद्वचनं श्रुत्वा प्ररोदमहमुच्चकैः ॥ ५० ॥**

इस कारण हे पुत्र ! शीघ्र उठकर घर को चलो, मैं उनके यह वचन सुनकर ऊँचे स्वर से रोने लगा।

**सा मामपृच्छद्धसिता कथं रोदिषि पुत्रक ॥**
**तदाहमब्रुवं मातरयमल्पबलः कपिः ॥ ५१ ॥**

माता मुझसे हँसती हुई बोली कि हे पुत्र ! तुम क्यों रोते हो? फिर मैंने उत्तर दिया कि हे मातः ! यह वानर तो अत्यन्त अल्प बल वाला है।

**मां च लङ्घयितुं कोऽपि नेशो मत्सेवकं विना ॥**
**न नित्यं यत्र मे भक्तिस्तत्र मोहो मया कृतः ॥ ५२ ॥**

मेरे सेवक के अतिरिक्त मुझे और कोई उलंघन नहीं कर सकता, जहाँ मेरी नित्य भक्ति नहीं होती हैं वहाँ मैं स्वयं मोहित करता हूँ।

**तेन बाधो न मोहश्च केवलं सुखमेव हि ॥**
**यन्मया मोहिता त्वं च मां वेत्सि तनयं स्वकम् ॥ ५३ ॥**

इसी से तो उन्हें किसी प्रकार की बाधा अथवा मोह नहीं होता केवल आनन्द ही होता है, आप ही मेरी माया से मोहित होकर मुझे अपना पुत्र जानती है।

**ममैश्वर्य्यं न जानासि ततो भीषयसे हि माम् ॥**
**इति श्रुत्वा यशोदा मामब्रवीदतिविस्मिता ॥ ५४ ॥**
**कथं पश्येयमैश्वर्य्यमहं जानामि यद्विभुम् ॥**
**ततो मयोक्तं समये दर्शयिष्ये स्ववैभवम् ॥ ५५ ॥**

मेरा ऐश्वर्य आपको विदित नहीं हैं, इसी से आप मुझे भय दिखाती है, यशोदा जी मेरे यह वचन सुनकर विस्मित होकर मुझसे बोली कि मैं कैसे तुम्हारा व्यापक ऐश्वर्य को जानूँ। तब मैंने उत्तर दिया कि समय आने पर अपने ऐश्वर्य को दिखाऊँगा ॥

**त्वं गच्छ माधुना गेहं गमिष्यामि कथञ्चन ॥**
**अथ सा मामनुद्रुत्य धृत्वाङ्के चानयद्गृहम् ॥ ५६ ॥**

अब आप ही अपने घर को जाओ मैं किसी प्रकार भी नहीं जाऊँगा, तब माता यशोदा मेरे पीछे दौड़कर मुझे गोदी में उठाकर अपने घर को ले गयी।

**विसस्मार मयोक्तं यद्गृहाऽऽसक्ता सती तु सा ।।५७ ।।**

मैंने जो कहा था उसे गृह कार्य में लगकर वह साध्वीयशोदा विस्मृत कर गयीं।

**इत्थं नित्यं गोकुले क्रीडमानः सर्व्वाल्लोकानात्मसौख्यप्रसक्तान् ।।**
**कृत्वा गोपीर्मोहयित्वा विनोदैः कालं निन्ये योगिनामप्यदृश्यः ।। ५८ ।।**

इस प्रकार से मैं योगियों को भी अदृश्य होकर नित्य ही गोकुल में क्रीडा करता हूँ और अपने सुख मे आसक्त मनुष्यों को तथा गोपियों को अनेक विनोदकृत्यों से मोहित कर समय को व्यतीत किया।

*इति आद्युपपुराणे वैयासिके नारदशौनकसंवादे कृष्णस्वगृहचौर्यवर्णनं नाम षड्विंशोऽध्यायः ।। २६ ।।*

*सकलपुराणसार भूत वैयासिक आद्युपपुराण में कृष्ण का अपने घर में चौर्य वर्णन नामक छब्बीसवाँ अध्याय समाप्त ।। २६ ।।*

# सप्तविंशोऽध्यायः

*श्रीभगवानुवाच*

**तस्मिन्दिने व्यतीते तु सखीनाहूय वानरान् ॥**
**तैः सार्द्धं विपिनं गन्तुमुद्यतः प्राह तानहम् ॥ १ ॥**

श्री भगवान् बोले कि उस दिन के व्यतीत हो जाने पर मैं फिर अपने सखा और वानरों को बुलाकर उनके साथ वन में जाने के निमित्त तैयार हुआ, और उनसे कहा।

**अद्य सर्व्वे वयं मल्लयुद्धेन विहरामहे ॥**
**ते ऊचुः कृष्ण ते तुल्यः कोऽपि नास्तीह बालकः ॥२ ॥**

आज हम सब मल्लयुद्ध के द्वारा विहार करेंगे, तो वे बोले कि हे कृष्ण ! इस संसार में तुम्हारे समान कोई भी बालक नहीं है।

**भवान्केन कथं चापि मल्लक्रीडां करिष्यति ॥**
**बलः कृष्णमथोवाच कुरु युद्धं मया सह ॥ ३ ॥**

अतः आप किसके साथ किस प्रकार से मल्लयुद्ध करेंगे ! तब बलराम जी कृष्ण से बोले कि तुम मेरे साथ मल्लयुद्ध करना।

**तदाऽहमब्रवं भ्रातस्त्वं मे मान्यतरोऽग्रजः ॥**
**कथमत्र भवेद्योग्यं युद्धं श्रुतिविदूषितम् ॥ ४ ॥**

मै बोला कि आप मेरे बड़े भाई और माननीय हैं, इसलिए तुम्हारे साथ मेरा युद्ध किस प्रकार से हो सकता है, ऐसा युद्ध वेदादि शास्त्रों में दूषित है।

**तदाह बलदेवो मां कुरु युद्धं ममेच्छया ॥**
**तथेत्युक्तं मया तत्र चावयोरभवद्रणः ॥ ५ ॥**

तब बलदेवजी मुझसे बोले कि हमारी इच्छा से ही तुम युद्ध करने में प्रवृत्त हो, ऐसा कहकर हम दोनों भाई मल्ल युद्ध करने लगे।

**नानारणविधानेन बलो मामजयत्पुरा ॥**

**ततः सर्व्वे सखायश्च जहसुर्मामभीक्ष्णशः ॥ ६ ॥**

पहले बलदेवजी ने विविध भांति से बल करके मुझे जीत लिया, यह देख कर मेरे सभी सखा मेरी निरन्तर हँसी करने लगे।

**कृष्ण नेय बकी दुष्टास्तृणावर्त्तो न वासुरः ॥**

**अयं हि बलिनां श्रेष्ठो बलभद्रो तवाग्रजः ॥ ७ ॥**

वे मुझसे बोले कि हे कृष्ण ! यह दुष्ट बकी नहीं है, न यह तृणावर्त्त ही है, यह बलभद्र हैं तुम्हारे बड़े भाई हैं, और यह बलवानों में सर्वश्रेष्ठ हैं।

**मया कृतञ्च मृद्भक्षं कथितुं मातरं ययौ ॥**

**चकार साक्षिणो गोपांस्तत्र गत्वा जगाद ह ॥**

**मृदं भक्षितवान्कृष्णः कथयामि तवाग्रतः ॥ ८ ॥**

मैंने मिट्टी खायी है, बलदेव जी मेरी माता से कहने के लिए गये और एक सखा को इस बात का साक्षी बनाया, फिर मेरी माता यशोदा जी के पास जाकर कहा कि आज कृष्ण ने मिट्टी खाई है, यही मैं तुम्हारे सामने कह रहा हूँ।

**रागोऽत्यन्तं च भविता निवारय ततो द्रुतम् ॥**

**इति त्ववस्थितो यावद्बलभद्रोऽहमागतः ॥ ९ ॥**

शीघ्र ही उसे रोको नहीं तो अत्यन्त रोग हो जायगा। बलभद्र जी जब तक ऐसा कहकर बैठे ही थे तब तक मैं वहाँ आ गया।

**यशोदा मामुवाचेदं तदाक्रोशसमन्विता ॥**

**कथं मृदं भक्षितवान्रोगस्ते भविता खलु ॥ १० ॥**

आक्रोश से युक्त यशोदा जी मुझसे बोलीं कि तुमने मिट्टी क्यों खाई? मिट्टी के खाने से शरीर में रोग हो जायगा।

**तथैव जायते वत्स देहवैवर्ण्यमेव च ॥**

**उवाचाह सखायो मे सर्व्वे मिथ्याभिशंसिनः ॥ ११ ॥**

हे वत्स ! इससे शरीर में विवर्णता हो जाती है। तब माता की यह बात सुनकर मैं बोला कि मेरे सब सखा झूठ कहते हैं।

**यदि सत्यगिरस्ते हि समक्षं पश्य मे मुखम्।।**
**व्यादेहीति तयोक्तस्तु मुखं व्यादितवानहम्।। १२ ।।**

यदि वे लोग सत्यवादी हैं तो स्वयं मेरा मुख देख लो, तब माता बोली कि अपना मुख फैलाकर दिखाओ, माता की इस बात को सुनकर मैनें मुख खोलकर दिखाया।

**सा तत्राखिललोकांश्चापश्यत्कौतुकमोहिता।।**
**भूपातालककुब्व्योम ज्योतिश्चक्रं सुरासुरान्।। १३ ।।**

कृष्णा के मुख में अखिल लोक, पृथ्वी, पाताल, दिशाएं आकाश ज्योतिषचक्र, सम्पूर्ण सुर और असुर।

**लोकांल्लोकाधिपांश्चान्यान्गिरीन्नानानदीनदान्।।**
**नगरग्रामसङ्घांश्च व्रजमात्मानमेव च।। १४ ।।**

लोक और लोकपाल तथा अन्य गण, पर्वत, नद, नदी नगरग्राम, व्रज और स्वयं अपने को।

**गोपानखिलगोपींश्च गोवत्सांश्च ददर्श ह।।**
**ततः क्षणेन सा गोपी स्मृतियुक्ता बभूव ह।।**
**कृष्णं बलं चात्मनोऽग्रे दृष्ट्वा विस्मयमागता।। १५ ।।**

गोप और समस्त गोपियां गायों तथा बछड़ों को देखा। उसके बाद वह गोपी क्षण भर के लिए स्मृति युक्त हो गयी।

**वितर्कयन्ती बहुधा निश्चयं नाधिगम्य च।।**
**स्वप्नो वा बुद्धिमोहो वा दैवी मायाऽथवासुरी।। १६ ।।**

और बार-बार विचार निश्चय को प्राप्त न करके मैं क्या स्वप्न देखती हूँ अथवा मेरी बुद्धि मोह से मोहित हो गयी, या दैवी अथवा आसुरी माया है।

**अथवा पुत्ररूपेण जातोऽयं भगवान्स्वयम्।। १७ ।।**

अथवा क्या स्वयं भगवान् ने पुत्र रूप से जन्म लिया है।

**एतावत्कालपर्य्यन्तं मोहिताऽनेन मायया।।**
**अधुना शरणं प्राप्ता मामुद्धर जनार्द्दन।। १८ ।।**

इतने दिनों तक इन्होंने अपनी माया के बल से मुझे मोहित करके रखा था, अब मैं इनकी शरणागत हूँ हे जनार्दन ! आप मेरा उद्धार करो।

**त्वतो न किञ्चिद्भिन्नं हि दृश्यते सचराचरम्॥**
**प्रतीयते हि मिथ्यापि समवस्थानसत्तया॥ १९॥**

इस संसार में जो कुछ चर अथवा अचर है उन सबमें तुमसे भिन्न कुछ भी नहीं होता है, यह असत्य संसार तुम्हारी ही सत्ता से सत्य के समान स्थिर हुआ दिखता है।

**यथा सूर्य्यस्य किरणे मृगतृष्णाजलभ्रमः॥**
**शुक्तौ रूप्यन्तथार्थेषु, सत्यबुद्धिः कुमेधसाम्॥ २०॥**

सूर्य की किरणों में जैसे प्यासे मृग को जल का भ्रम हो जाता है और सीपी में जिस प्रकार चांदी का भ्रम होता है; इसी प्रकार कुबुद्धि पुरुषों की सत्यबुद्धि प्रयोजनों में होती है।

**विषयाः स्वप्नसङ्काशा यथा मायामनोरथौ॥**
**सर्व्व एते प्रणश्येयुस्तथा सर्व्वमिदं जगत्॥ २१॥**

यह सम्पूर्ण विषय भोग स्वप्न के समान है और उसी प्रकार माया तथा मनोरथ होते हैं यह सभी नष्ट हो जाते हैं तथा सम्पूर्ण यह संसार नाशवान् है।

**तडिच्चञ्चलमायुश्च यौवनं कुसुमोपमम्॥**
**सस्वादाश्च विनश्यन्ति तथा प्राणिसमागमाः॥ २२॥**

आयु बिजली के समान चञ्चल है, यौवन फूल के समान अनित्य है। मनुष्यों का परस्पर स्वाद युक्त समागम भी नष्ट हो जाता है।

**गन्धर्वनगरप्रख्याः कस्तत्र रमते नरः॥**
**माया ते महती ब्रह्मंस्त्वया सम्मोहितं जगत्॥ २३॥**

ये सब गन्धर्वनगर के समान हैं कौन मनुष्य आनन्द करता है अर्थात् कोई नहीं। हे ब्रह्मन् तुम्हारी माया विशाल है। तुमने संसार को मोहित किया है।

**न पश्यति जनो मुग्धस्त्वमीश्वरमुपद्रुतः॥**
**न वेत्ति कश्चनात्मानमनया मोहितो जनः॥ २४॥**

मोहित व्यक्ति भ्रान्त होकर ईश्वर के स्वरूप को नहीं जान पाता है।इस प्रकार माया से मोहित कोई व्यक्ति अपने को भी नहीं जानता है।

**अविवेकप्रणष्टाक्षो यथान्धो दर्पणे मुखम्॥**
**एवं विदिततत्वायां यशोदायां पुनर्मया॥ २५॥**

अज्ञान के वश से उनके ज्ञान के नेत्र नष्ट हो गये हैं, जैसे अन्धा दर्पण में मुख को नहीं देख पाता है। इस प्रकार यशोदा जी को जब इस तत्त्व का ज्ञान हुआ, तब मैंने।

**प्रसारिता महामाया पुत्रस्नेहमयी परा॥**
**विसस्मार तदा सर्व्वमपूर्व्वं तत्त्वबोधनम्॥ २६॥**

अपनी पुत्र स्नेहमयी परा महामाया का विस्तार किया, उसी के प्रभाव से उनका अपूर्व तत्त्व ज्ञान विस्मृत हो गया।

**उवाच पुत्र आगच्छ क्षुधितोऽसि स्तनं पिब॥**
**त्वं मे प्राणप्रियः कृष्ण भुङ्क्ष्व क्रीड सुखेन हि॥ २७॥**

तब वह मुझसे कहने लगीं कि हे पुत्र ! आओ तुम्हें भूख लगी होगी मेरे स्तनों का पान करो, हे कृष्ण ! तुम मुझे प्राणों से भी अधिक प्यारे हो, अतः सुख से भोजन करो और खेलो।

**इत्यादिस्नेहवाक्येन यशोदा मामलालयत्॥**
**यत्तु मत्तत्त्वविज्ञानान्मुक्तिः स्याच्चित्रमत्र किम्॥ २८॥**

इत्यादि स्नेह के वचनों को कहकर यशोदा मुझे प्यार करने लगी। मेरे तत्त्व को जानने से मनुष्यों की मुक्ति हो जाती है इसमें कुछ भी क्या आश्चर्य है।

**सांसारिकैः स्नेहपाशैर्बन्धान्मुक्तिस्तु यद्भवेत्॥**
**तत्राश्चर्य्यं मुनेऽत्रेति मोहिता मायया तु सा॥ २९॥**

सांसारिक प्रेम बन्धन से जिन मनुष्यों को मुक्ति होती हैं, हे मुने ! इसमें भी कुछ आश्चर्य नहीं है परन्तु वह यशोदा जी मेरी माया से मोहित हो गयी थीं।

**मयि प्रसन्ने मज्ज्ञानं भवत्येव न दुर्लभम्॥**
**पुत्रेति मयि यत्प्रेम तद्दुर्लभतरं नृणाम्॥ ३०॥**

मेरे प्रसन्न होने पर मेरा दुर्लभ ज्ञान हो जाता है। यह पुत्र है ऐसा जानकर मुझमें जो प्रेम है वह अत्यन्त ही दुर्लभ है।

**अतः प्रसारिता माया पुत्रस्नेहमयी मया॥**
**अतो यशोदा मत्स्नेहं चक्रे मुदितमानसा॥ ३१॥**

इसीलिए मैंने पुत्रस्नेहमयी माया को फैलाया था, अत एव यशोदा जी आनन्दित होकर मुझे स्नेह करती थीं।

**वेदोऽपि यं न जानाति योगिनो यमुपासते॥**
**यजन्ति यज्ञैर्विप्राश्च तं मां सा वेत्ति बालकम्॥ ३२॥**

वेद भी जिसको नहीं जान सकते, योगीगण जिसकी उपासना करते हैं, और ब्राह्मण भी यज्ञों के द्वारा जिसका यजन करते हैं, उसे ही वह यशोदा जी अपना बालक जानती हैं।

**अपालयत्पुत्रबुद्ध्या मामतीव सुखेच्छया॥**
**तस्याश्च सदृशं भाग्यं नान्यस्य भुवि विद्यते॥ ३३॥**

वह अपने सुख की इच्छा से पुत्र जान कर मेरा लालन पालन करती हैं, इनके समान भाग्यशालिनी पृथ्वी पर दूसरी स्त्री कोई नहीं है।

**न पुण्यपुञ्जैर्न तपोभिरुग्रैर्न देव तीर्थाटनयज्ञयोगैः॥**
**न दृश्यते क्वापि च यः कथञ्चित् सोऽहं हरिः पुत्रतनुश्च यस्याः। ३४।**

सैकड़ों पुण्यों के प्रताप से भी जिसको नहीं पा सकते, देवताओं की पूजा उग्र तप, तीर्थाटन तथा अनेक यज्ञों के संयोग से भी जो दिखायी नहीं देता, वही भगवान् यशोदा जी के यहाँ पुत्र रूप से जन्म लेकर अवतरित हैं, वह मैं ही हूँ।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके नारदशौनकसंवादे कृष्णमृद्भक्षणलीलावर्णनं नाम सप्तविंशोऽध्यायः॥ २७॥*

*सकलपुराण सारभूत वैयासिक आद्युपपुराण में नारद शौनक संवाद के रूप में कृष्ण का मृद्भक्षण लीला वर्णन नाम सत्ताईसवाँ अध्याय समाप्त॥*

# अष्टाविंशोऽध्यायः

*श्रीभगवानुवाच*

**कदाचित्प्रातरुत्थाय यशोदा जननी मम ॥**

**दासीषु कर्म्मसक्तासु निर्म्ममन्थ स्वयं दधि ॥ १ ॥**

श्रीभगवान् बोले कि मेरी माता यशोदा एक दिन प्रातः काल ही उठी, उस समय सम्पूर्ण दासियों के अपने-अपने काम में लग जाने पर, तब वह स्वयं दही मथने लगीं।

**गायन्ती मम कर्म्माणि गीतानि च सुरादिभिः ॥**

**प्रचलत्क्षौमवसना संस्वनद्रसनादिका ॥ २ ॥**

उस समय वह देवतादिकों के साथ मेरे कर्मों का गान करने लगी, दही मथने के समय माता के शरीर पर रेशमी वस्त्र चलायमान हो रहे थे तथा करधनी बज रही थी।

**रज्ज्वाकर्षवशस्वेदकणव्याप्तमुखाम्बुजा ॥**

**चलत्केयूरवलयहारालकसुकुण्डला ॥ ३ ॥**

रस्सी के खींचने से पसीने की बूँदों से व्याप्त मुखकमल वाली, केयूर, कङ्कण, हार, केश और कुण्डल को हिलाने वाली।

**श्वासोच्छ्वासचलन्नीवित्रिवलीव्याकुलोदरा ॥**

**तत्रागत्य मया मन्थो हस्तेन क्रामितो रुषा ॥ ४ ॥**

अधिक परिश्रम करने से तथा श्वास के अधिक चलने से चञ्चल और त्रिवली रेखाओं से व्याप्त उदर वाली यशोदा माता थीं। वहीं पर आकर मैंने क्रोध से अपने हाथों के द्वारा मथानी पकड़ ली।

**तथापि नात्यजन्माता दधिमन्थनमेव हि ॥**

**ममातिशययत्नेन कथञ्चिद्दधिमन्थनम् ॥ ५ ॥**

परन्तु माता ने तब भी दही मन्थन नहीं छोड़ा, फिर मेरे बहुत यत्न करने पर माता ने दही मन्थन को किसी प्रकार।

**त्यक्त्वाऽङ्के मां समाधाय प्रीत्या स्तनमपाययत्॥**

**मुहुर्मुहुर्मम मुखमपश्यन्मुदितानना॥ ६॥**

छोड़ा और अत्यन्त प्रीति से मुझे अपनी गोद में बैठाकर दूध पिलाया, वह प्रसन्न मुखवाली उस समय बारबार मेरे मुख को देखती थीं।

**चुल्ल्यामारोपितं दुग्धं वीक्ष्य यात्पात्रतो बहिः॥**

**पतदग्नौ जलैः सेक्तुं मां त्यक्त्वा द्रुतमुद्ययौ॥ ७॥**

चूल्हे पर रखा हुआ दूध बाहर निकल रहा है और वह अग्नि में गिर रहा है इसे देखकर उसको जल से सींचने के लिए मुझे त्याग कर शीघ्र चली आयीं।

**अहो दुरत्यया माया लोकस्यार्थप्रणाशिनी॥**

**यया विमोहितं सर्व्वं जगद्भ्रमति नित्यशः॥ ८॥**

अहो ! लोगों के अर्थ की प्रणाशिनी दुरत्यया माया है जिससे सम्मोहित जगत् नित्य भ्रमित होता है।

**हानिकाले परित्यज्य मां जनोऽन्यत्र गच्छति॥**

**तस्य त्रैकालिकी हानिर्जायते नात्र संशयः॥ ९॥**

मनुष्य अपनी क्षति के होने के समय मुझे त्यागकर अन्य स्थान में चले जाते हैं। इसीलिए उनकी तीनों काल की हानि होती हैं इसमें कुछ सन्देह नहीं है।

**मां त्यक्त्वा सा ययौ यत्र पय उत्सिक्ततां गतम्॥**

**तावन्मया तु दध्यन्नं भुक्त्वा दधि विनाशितम्॥ १०॥**

माता इस समय मुझे छोड़कर जहाँ पर दूध उफन रहा था वहाँ चली गयी, मैंने उसी अवसर पर दही को खाकर नष्ट कर दिया।

**गृहीतं नवनीतञ्च नीत्वा क्षिप्तमितस्ततः॥**

**एवं हानित्रयं तत्र यशोदायास्तथाऽभवत्॥ ११॥**

मक्खन को लेकर इधर उधर फेंक दिया, इस प्रकार यशोदा जी की तीन हानियां हुईं।

**मामेव यः परित्यज्य वस्तुनोऽर्थेऽभिधावति॥**

**विवेकरहितो मूर्खो दुःखमेवाऽभिपद्यते॥ १२॥**

जो मनुष्य मुझे त्यागकर अन्य पदार्थों को पाने की इच्छा से जाते हैं वे मूर्ख हैं और उनको कभी ज्ञान नहीं होता और इसी कारण से उन्हें दुःख ही मिलता है।

**तस्य त्रैकालिकी हानिर्भवत्येवान्यथा नहि ॥**
**उत्तार्य्य सुभृतं दुग्धं यावदायाति सत्वरम् ॥ १३ ॥**

उनकी तीनों काल की हानियाँ होती हैं इसमें कुछ भी सन्देह नहीं है। जब माता उफने हुए दूध को उतारकर अतिशीघ्र आयीं।

**दधिभाण्डं भग्नं दृष्ट्वा परितः सा व्यलोकयत् ॥**
**मामदृष्ट्वा बहिर्गेहाभ्यन्तरेऽपश्यदुद्यतम् ॥ १४ ॥**

तब उन्होंने दही की टूटी मटकी को इधर उधर गिरा हुआ देखा।मुझे बाहर न देखकर घर के अन्तर्गत यह उपद्रव देखा।

**नवनीतस्य हरणे स्थापयित्वा उलूखलम् ॥**
**मर्कटेभ्यः प्रयच्छन्त गव्यं यत्सञ्चितं बहु ॥ १५ ॥**

इधर मैंने मक्खन को ले जाकर ओखली में रखा और उनके सञ्चित किये हुए अधिक मात्रा में गव्य को मैं वानरों को देने लगा।

**सञ्चयो नहि कर्त्तव्यो मद्भक्तैः कृपणैर्यथा ॥**
**सञ्चयस्य विनाशो हि जायते निश्चितो बुधैः ॥ १६ ॥**

जो लोग हमारे भक्त हैं वे कभी कृपण के समान इकट्ठा नहीं करते, इकट्ठा करने से निश्चय ही विनाश हो जाता है ऐसा विद्वानों ने निश्चित किया है।

**यस्याहञ्च सदा दाता स कथं कृपणो भवेत् ॥**
**यत्राहं तत्र किं नास्ति भक्तिः किं कृपणायते ॥ १७ ॥**

मैं सर्वदा ही जिसको देता रहता हूँ वह क़िस रीति से कृपण हो सकता है, मैं जहाँ पर हूँ वहाँ क्या नहीं है भक्ति कभी कृपण नहीं हो सकती।

**यत्किञ्चिन्मम भक्तस्य तेन प्रीणाति मां सदा ॥**
**दानैर्भोगैर्ममोक्तैश्च सफलं जीवितं नृणाम् ॥ १८ ॥**

मेरे भक्तों के पास जो कुछ भी है उसी से वह मुझे संतुष्ट करते हैं, दान और भोग के करने तथा मेरे कथनों से मनुष्यों का जीवन सफल होता है।

**सा पश्यन्ती यष्टिहस्ता यशोदा बालकं हि माम्।।**
**गृहान्तरे समागत्य शनैर्मे पृष्ठतः स्थिता।। १९।।**

यशोदा जी छड़ी को हाथ में लेकर मुझ बालक को देखती हुई धीरे-धीरे घर से बाहर आ क्रर मेरे पीछे खड़ी हो गयीं।

**आगतामहमालोक्य समुत्तीर्य्य पलायितः।।**
**ग्रहीतुकामा मे पश्चादधावदतिवेगतः।। २०।।**

मैं उनको आयी हुई देखकर उसी समय वहाँ से उछल कर भाग गया, वह भी मुझे पकड़ने के लिए शीघ्रता के साथ मेरे पीछे-पीछे दौड़ीं।

**न लेभे स्पर्शनं चापि ग्रहणन्तु कुतो भवेत्।।**
**यं योगिनोऽपि स्वमनः प्रयच्छन्ति सदा हि माम्।। २१।।**

परन्तु मुझे पकड़ना तो दूर रहा वह मुझे स्पर्श तक भी न कर सकी, योगीगण भी सर्वदा जिस मुझको अपना मन समर्पण करते हैं।

**ग्रहीतुं बहुकालेन न स्प्रष्टुमपि ते क्षमाः।।**
**अतिश्रमाकुला व्यग्रां धावन्ती तामितस्ततः।। २२।।**

वे भी चिरकाल तक ग्रहण अथवा स्पर्श भी नहीं कर सकते। माता को अत्यन्त परिश्रम से व्याकुल हुई इधर-उधर व्यग्र होकर दौड़ती हुई।

**दृष्ट्वा मेऽजायत कृपा ततोऽस्या ग्रहणेऽभवम्।।**
**करे गृहीत्वा जननी सयष्टिर्मामभीषयत्।। २३।।**

देखकर मुझे अत्यन्त ही कृपा उत्पन्न हुई, तब मैंने अपने आप ही उनको अपने को पकड़ा दिया, छड़ी वाली मेरी माता ने मेरे दोनों हाथों को अपने हाथ में पकड़ लिया और मुझे डराती और धमकाती हुई मुझसे कहने लगी।

**स्फोटनं दधिभाण्डस्य घृतदुग्धादिनाशनम्।।**
**त्वया कथं कृतं मन्द तत्फलन्ते ददाम्यहम्।। २४।।**

हे मूर्ख ! तुमने किसलिए दही के बर्तन तोड़े और धृत दूध आदि को नष्ट कर दिया, उसका फल मैं अच्छे प्रकार से तुम्हें आज दूँगी।

**नित्य गोप्यः समागत्य ब्रुवन्ति तव चेष्टितम्।।**
**मया प्रतीतिर्न कृता साध्वीनां वचनेष्वपि।। २५।।**

गोपियाँ सर्वदा मेरे पास आकर तुम्हारे चरित्रों को कहती थी, वह अत्यन्त ही साध्वी हैं तथापि मैं उनकी बातों का विश्वास नहीं करती थी।

**एवमुक्त्वा ततः क्रोधाज्जननी सत्वरा सती ॥**
**उलूखले तु सा रज्जुं जग्राह मम बन्धने ॥ २६ ॥**

माता यह कहकर बड़ी क्रोधित हुई और शीघ्र ही उन्होंने ओखली से मुझे बाँधने के लिए रस्सी को हाथ में उठाया।

**बन्धनं तस्य भवति यस्य पूर्व्वाऽपरं भवेत् ॥**
**पूर्व्वाऽपरञ्च मे नास्ति बन्धनं जायते कथम् ॥ २७ ॥**

जो पूर्वापर है उसका ही बन्धन हो सकता है। मेरा पूर्व और पर कुछ भी नहीं है, इसीलिए मैं किस प्रकार से बंध सकता हूँ।

**बृहत्वाद्ब्रह्म चाहं तु विशेषाच्छृणु नारद ॥**
**तत्कथं वेष्टनं मे स्यादनाद्यन्तस्य रज्जुतः ॥ २८ ॥**

हे नारद ! तुम सुनो, विशेष रूपेण मैं बृहद् होने के कारण ब्रह्म हूँ, मेरा आदि और अन्त भी नहीं है। किस प्रकार मुझे वेष्टन होगा।

**यदा बध्नाति दाम्ना सा द्व्यङ्गुलोनमभूत्तदा ॥**
**तेनान्यत्सन्दधे माता तदपि न्यूनतां गतम् ॥ २९ ॥**

यशोदा जी जब रस्सी से मुझे बांधने लगी, तब वह दो अंगुल कम पड़ गयी। उन्होंने दूसरी रस्सी जोडी, वह भी न्यूनता को प्राप्त हो गयी।

**एवं स्वगेहदामानि न्यूनानि ह्यभवँस्तदा ॥**
**गोपिकास्तत्समाकर्ण्य ममोलूखलबन्धनम् ॥ ३० ॥**

इस प्रकार वे घर की सम्पूर्ण रस्सियों को लायीं और सभी कम पड़ गयीं, कोई भी पूरी न हुई। इधर सभी गोपियाँ मेरे उलूखल से बँधने के वृत्तान्त को सुनकर।

**समाजग्मुर्गृहद्वारं सर्वास्ता ह्यब्रुवन्वचः ॥**
**यशोदे बहुशोऽस्माभिरुक्तं शिक्षय पुत्रकम् ॥ ३१ ॥**

घर के द्वार पर आयीं और कहने लगीं कि हे यशोदे ! हमने अनेक बार कहा था कि तुम अपने पुत्र को शिक्षा दो।

**बन्धनात्ताडनाद्बालो भवेद्धि परमं सुधीः ।।**

**किन्त्वस्माकं तव सुतः प्रियः प्राणाधिको ह्यसौ ।। ३२ ।।**

बन्धन और ताड़ना करने से ही पुत्र परम बुद्धिमान् होता है, किन्तु यह आपका पुत्र हमें प्राणों से भी अधिक प्यारा है।

**तथापि खलु शिक्षार्थं देव्यब्रूमह्यभीक्ष्णशः ।।**

**पुत्रस्नेहवशादेव त्वया तन्नावधारितम् ।। ३३ ।।**

हे देवि! तथापि हम लोग आपसे इसके शिक्षा देने के लिए सर्वदा ही कहती रहीं परन्तु तो भी आप अपने पुत्र के स्नेह के वश से इस में ध्यान नहीं दिया।

**आत्मद्रव्यविनाशेन चाधुना कर्त्तुमुद्यता ।।**

**यथात्मवसुनाशेन क्षोभो मनसि वर्त्तते ।। ३४ ।।**

अब जब अपनी हानि हुई तब उस कार्य को करने के लिए उद्यत हुई। अपने धन के नाश से मन में जैसा दुःख होता है।

**तथा न चान्यहानौ हि त्वयि प्रत्यक्षतां गतम् ।।**

**सुतस्य कर्म्म श्रुत्वाऽपि नहि चाक्रोशनं कृतम् ।। ३५ ।।**

अन्य की हानि से मन में वैसा दुःख नहीं होता, यह तुम में प्रत्यक्ष हो गया है, पुत्र के कामों को सुनकर भी आप उस पर क्रोध नहीं करती थी।

**इदानीं क्व गतः स्नेहो यत्त्वं बद्धुमिहेच्छसि ।।**

**बालोऽयं मे न जानाति कथं न प्रोच्यतेऽधुना ।। ३६ ।।**

अब आपका वह स्नेह कहाँ चला गया, जिससे आप इस बालक को यहाँ बांधना चाहती हैं, अब क्यों नहीं कहती कि मेरा यह बालक कुछ नहीं जानता।

**इति तेषां वचः श्रुत्वा जननी व्याकुलाऽभवत् ।।**

**अशक्ता बन्धने यत्नपरा परमविस्मिता ।। ३७ ।।**

माता यशोदा जी उनकी यह बातें सुनकर अत्यन्त ही व्याकुल हो गयीं, जब उनके यत्न करने पर भी मैं न बंध सका तब उनको अत्यन्त ही आश्चर्य हुआ।

**न शशाक तदा बद्धुं श्रमवारिपरिप्लुता ।।**

**न जाने कि भवत्यत्र जायते नास्य बन्धनम् ।। ३८ ।।**

तब वह पसीने से लथपथ यशोदा जी बांधने में समर्थ न हुईं और विचारने लगीं, नहीं जानती कि क्या हो रहा है जिससे मै इसको नहीं बांध पा रही हूँ ।

**एवं ब्रुवाणां तां दृष्ट्वा विषण्णां कृपयान्वितः ।।**

**गतोऽहं बद्धता तस्या अपि चैकान्तभावतः ।। ३९ ।।**

ऐसी बोलती हुई विषादयुक्त उन्हें देखकर तब मुझे दया उत्पन्न हुई और तब मैंने स्वयं अपने को एकान्त भाव से बंधा लिया ।

**उलूखलेन बद्धा सा सक्तासीद्गृहकर्म्मसु ।।**

**मद्बन्धनं विसस्मार मोहिता मायया मम ।। ४० ।।**

वह मुझे ऊखल में बांधकर घर के कामकाज में आसक्त हो गयी और मेरी माया से मोहित होकर मेरे बांधने को भूल गयी ।

**तदैवान्या गोपिकाश्च प्रययुर्भवनं स्वकम् ।। ४१ ।।**

तभी अन्य गोपियाँ भी अपने-अपने घरों को चली गयीं ।

*नारद उवाच*

**भगवन्देवदेवेश लोकनाथ जगत्प्रभो ।**

**त्वद्भक्तानां नोचितं यत्तन्मया चेष्टितं हरे ।। ४२ ।।**

नारद जी बोले कि, हे भगवन् ! हे देवेश ! हे लोकनाथ ! हे जगत्प्रभो । आपके भक्तों को जो उचित नहीं हैं मैंने उसी को किया है ।

**यत्कुबेरस्य तनयौ मया शप्तावनागसौ ।**

**त्वद्भक्तानां क्रोधहानिः सदैवान्योपकारिता ।। ४३ ।।**

मैंने बिना कुबेर के दोनों पुत्रों को शाप दिया था, आपके भक्तों की क्रोध हानि सर्वदा ही दूसरों की उपकारिणी है ।

**द्वेषो दम्भो मत्सरो वा असूया भ्रम एव च ।।**

**न भवेत्कर्हिचित्कृष्ण तच्च सर्व्वं ममाऽभवत् ।। ४४ ।।**

द्वेष, दम्भ, मत्सर, असूया और भ्रम ये कभी नहीं होने चाहिए, परन्तु हे कृष्ण ! यह सभी मुझमें हो गये हैं।

**त्वद्भक्ताः साधवः शक्ताः सुहृदधः सर्व्वदेहिनाम्॥**

**अनन्यक्षमिणश्चैव तथा सर्व्वोपकारिणः॥ ४५॥**

आपके भक्त तो साधु, सब प्राणियों के मित्र समर्थ परमक्षमाशील तथा सर्वोपकारी होते है।

**पश्चातापस्तदारभ्य ममाभूत्सततं हृदि॥**

**किं मयाचरितं यक्षौ कथं शप्तौ शिवानुगौ॥**

**तन्ममाऽऽचक्ष्व भगवन्नहं तत्कृतवान्कथम्॥ ४६॥**

जब से मैंने उनको शाप दिया था, तभी से इसका पश्चाताप मेरे हृदय में रहता है, मैंने किस कारण से कुबेर के दोनों शिवानुग पुत्रों को शाप दिया था हे भगवन् ! उसे आप कृपा कर मुझसे कहिए।

*श्रीकृष्ण उवाच*

**कुबेरस्य सुतौ प्रीतं पितरं पृच्छतः स्वकम्॥**

**कः श्रेष्ठः सर्व्वदेवानां भजनीयो जनैश्च कः॥ ४७॥**

श्रीकृष्ण जी बोले कि हे नारद ! कुबेर जी के दोनों पुत्र प्रीतिपूर्वक अपने पिता से पूछने लगे कि, सम्पूर्ण देवताओं के मध्य कौन श्रेष्ठ है और मनुष्यों को किसका भजन करना उचित है।

**निर्भयो जायते मर्त्यः कस्य देवस्य पूजनात्॥**

**कं भजन्मुच्यते जन्तुः सद्यः संसारबन्धनात्॥ ४८॥**

किस देवता की पूजा करने से मनुष्य निर्भय हो जाते है और किसका भजन करने से मनुष्य संसार रूपी बन्धन से शीघ्र ही मुक्त जाते है।

**इह भोगानवाप्नोति परत्रात्युत्तमां गतिम्॥ ४९॥**

इस लोक में सुन्दर भोगों को प्राप्त करता है और परलोक में उत्तम गति होती है।

*कुबेर उवाच*

**विष्णुः सर्व्वेश्वरः सर्व्वैः सेव्योऽसौ भक्तवत्सलः॥**

**परमात्माऽखिलाधारो योगिध्येयाङ्घ्रिपल्लवः॥ ५०॥**

कुबेर जी बोले कि विष्णु भगवान् सभी के स्वामी है, अतः वह भक्त वत्सल कृपानाथ सबके सेव्य हैं वही परमात्मा इस अखिल संसार के आश्रय हैं योगी लोग उन्हीं के चरण कमलों का ध्यान करते है।

**स्वभक्तेभ्यः सदा तुष्टः स्वात्मानमपि यच्छति ॥**

**निष्कामैश्च सकामैश्च सेवनीयः प्रभुः स हि ॥ ५१ ॥**

वह जब सन्तुष्ट हो जाते हैं तो अपने भक्तों को आत्मदान कर देते हैं। वही सबके प्रभु है, निष्काम तथा, सकाम सभी लोगों के द्वारा वे सेवनीय हैं।

**सर्व्वेऽधिकारिणो वर्णा आश्रमाः शिशवः स्त्रियः ॥**

**अन्त्यजा पुल्कशा म्लेच्छा ये चान्ये पापयोनयः ॥ ५२ ॥**

सभी वर्ण, आश्रम, बालक, स्त्री, अन्त्यज, पुल्कश, म्लेच्छ और जो अन्य पाप योनियों वाले प्राणी है वे सभी, इनकी भक्ति के अधिकारी है।

**सर्व्वैः सेव्यो देवदेवः परेशो भक्त्या नित्यं श्रद्धयाऽनन्यवृत्त्या ॥**

**यस्मिंस्तुष्टे जायते सर्व्वमेव रुष्टे नाशं याति चैवं सदैव ॥ ५३ ॥**

नित्य श्रद्धा, अनन्यवृत्ति तथा भक्ति से देव देव, परेश भगवान् विष्णु सभी के द्वारा सेव्य है। जिनके प्रसन्न होने पर सब कुछ हो जाता है और रुष्ट होने पर सब कुछ नष्ट हो जाता है।

***इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके नारदशौनकसंवादे श्रीकृष्णोलूखलबन्धनं नाम अष्टाविंशोऽध्यायः ॥ २८ ॥***

***सकलपुराणसारभूत वैयासिक आद्युपपुराण में कृष्णोलूखलबन्धन नामक अट्ठाईसवाँ अध्याय समाप्त ॥ २८ ॥***

# एकोनत्रिंशोऽध्यायः

*श्रीभगवानुवाच*

**इत्यादिष्टौ कुबेरेण तौ चाऽपि प्रेमभक्तितः ॥**
**नानापूजाप्रयोगैश्च मदाराधनमीहितुः ॥ १ ॥**

श्रीभगवान् जी बोले कि कुबेर जी के ऐसे उपदेश को सुनकर वे दोनों पुत्र अत्यन्त प्रीति और भक्ति के साथ अनेक पूजा के प्रयोगों से मेरी आराधना करने लगे।

**कदाचिदलकायान्तौ पर्य्यटन्तावपश्यताम् ॥**
**महादेवगणश्रेष्ठं नन्दिनं भक्तवेष्टितम् ॥ २ ॥**

कभी अलकापुरी में पर्यटन करते हुए उन दोनों महादेव जी के गणों में श्रेष्ठ भक्तों से युक्त नन्दी को देखा।

**ऊचुतुस्तौ कुतो नन्दिन्नागतस्ते प्रभुश्च कः ॥**
**हे साधुवर पश्य त्वं मदाघूर्णितलोचनः ॥ ३ ॥**

इसके बाद उससे कहने लगे कि हे नन्दि ! तुम कहाँ से आ रहे हो कौन तुम्हारा स्वामी है हे श्रेष्ठ साधु ! मद से रक्त नेत्र वाले तुम देखो।

**असत्सम्भाषणे जन्तुर्भ्रष्टो भवति निश्चितम् ॥**
**ह्रीः श्रीः कीर्त्तिस्तथा कान्तिः सर्वं वै याति सङ्क्षयम् ॥ ४ ॥**

असत्पुरुषों के साथ सम्भाषण करने से जीव निश्चय ही भ्रष्ट हो जाते हैं और उसके साथ लज्जा, कीर्ति लक्ष्मी तथा कान्ति इन सबका भी नाश हो जाता है।

*नन्द्युवाच*

**शृणुत कुबेरतनयौ मम नाथो महेश्वरः ॥**
**यः स्वयं विश्वमखिलं सृजत्यवति हन्ति च ॥ ५ ॥**

नन्दी ने कहा कि हे कुबेर के पुत्रों ! सुनो मेरे स्वामी देवाधिदेव महादेव जी हैं जो स्वयं सृष्टि, स्थिति तथा प्रलय के कर्त्ता हैं।

**वयं तत्सेवका नूनं बहवो मत्समः परे ॥**

**यत्सेवकाः सदानन्दमयाः सततनिर्भयाः ॥ ६ ॥**

उन्हीं के सेवक हैं। मेरे समान और भी अनेक सेवक मेरे साथ सर्वथा आनन्दित और निरन्तर निर्भय रहते है।

**चरन्ति स्वेच्छया लोकान्कर्म्मपाशैर्न संयुताः ॥**

**भक्ष्याभक्ष्ये तथा येषां पापे तेषां न दूषणम् ॥ ७ ॥**

अपनी इच्छानुसार लोकों का भ्रमण करते हैं और जो कर्म के बन्धन में नहीं फँसते और जिन्हें भक्ष्याभक्ष्य तथा पाप का भी दोष नहीं होता।

**आशु तुष्यति विश्वेशः स भक्तैः सेवितो ध्रुवम् ॥**

**इति नन्दिवचः श्रुत्वा भ्रान्तचितौ ततस्तु तौ ॥ ८ ॥**

वे विश्वेश्वर भक्तों की सेवा करने से निश्चय ही शीघ्र प्रसन्न हो जाते हैं, नन्दी के ऐसे वचनों को सुनने से उनके चित्त में भ्रम हो गया।

**हरिभक्तिं विहायाशु सञ्जातौ शिवसेवकौ ॥**

**नूनं परोपदेशेन भ्रष्टा भवति धीर्धृता ॥ ९ ॥**

तब वे हरिभक्ति को त्यागकर शिवजी के भक्त हो गये, निश्चय ही दूसरों के उपदेश से ही मनुष्यों की बुद्धि भ्रष्ट हो जाती है।

**भक्तोऽपि भ्रंशते शीघ्रमितरेषाञ्च का कथा ॥**

**तत आरभ्य तौ मत्तौ कुबेरतनयावुभौ ॥**

**कुकर्म्मकरणोद्युक्तौ चेरतुर्बुद्धिविभ्रमात् ॥ १० ॥**

भक्तों की बुद्धि भी शीघ्र ही भ्रष्ट हो जाती है तब फिर दूसरों की तो बात ही क्या है। इसी से कुबेर जी के दोनों पुत्र उन्मत्त हो गये और बुद्धि के विभ्रम से कुकर्म करने में प्रवृत्त हुए।

**एकदा शैलविपिने रम्ये मन्दाकिनीतटे।**

**स्त्रीगणैरनुगायद्भिः श्रिया मत्तौ विचेरतुः ॥ ११ ॥**

एक बार वे दोनों ऐश्वर्य के गर्व से मत्त होकर सुन्दर मन्दाकिनी के किनारे पर्वत और वनों में, गाती हुई स्त्रियों के साथ विहार कर रहे थे।

**स्त्रीणां सङ्गः प्रहृष्टानां तत्त्वविस्मृतिकारणम् ॥**

**किं पुनर्म्मदमत्तानां चित्तभ्रंशमुपेयुषाम् ॥ १२ ॥**

**विहत्य वनकुञ्जेषु ततो मन्दाकिनीजले॥**

**प्रचक्रतुर्जलक्रीडां सिषिचुस्तौ स्त्रियोऽभितः॥ १३॥**

स्त्रियों का सङ्ग स्वस्थ प्रहृष्ट मनुष्यों के तत्त्वज्ञान की विस्मृति का कारण है, फिर जो मद से मत्त तथा चित्त भ्रंश को प्राप्त होने वालों के लिए कहना ही क्या? वनकुञ्जों में विहार करके तत्पश्चात् मन्दाकिनी के जल में क्रीडा करने लगे फिर स्त्रियों ने चारों ओर से उनके ऊपर सिञ्चन प्रारम्भ किया।

**ततो भवान्समायातो यदुक्तं यत्कृतं त्वया॥**

**तत्स्मर्य्यते न चेद्वच्मि त्वयाहं सकलं मुने॥ १४॥**

हे मुने ! तुमने उस समय वहाँ जाकर जो कहा था और किया था उसे स्मरण करो यदि स्मरण न हो तो सब कुछ कहूँगा।

*श्रीनारद उवाच*

**मयैतत्स्मर्य्यते कृष्ण कुबेरतनयावुभौ॥**

**सत्सङ्गेन श्रिया युक्तावपि दुस्सङ्गदूषितौ॥ १५॥**

नारद जी बोले कि हे कृष्ण! स्मरण आता है कि वे दोनों कुबेर के पुत्र सत्सङ्गति से श्रीयुक्त होते हुए भी दुष्टों के सङ्ग से दूषित थे।

**कुतो भूतमिदं चित्रं मत्तौ च धनगर्वितौ॥**

**अहो श्रीमदमाहात्म्यं बुद्धिभ्रंशकरं परम्॥ १६॥**

अहो ! यह आश्चर्य कहाँ से घटित हुआ कि वे दोनों मदमत्त और धन से गर्वित हो गये। यह लक्ष्मी के मद का माहात्म्य है जो परम बुद्धि भ्रंशक है।

**न पश्यति जनो नूनमात्मानं हृद्यधिष्ठितम्॥**

**कुसङ्गदूषिता बुद्धिर्नहि गच्छति शुद्धताम्॥ १७॥**

व्यक्ति निश्चित रूपेण हृदय में स्थित आत्मा को नहीं देखता है। कुसङ्गति से दूषित बुद्धि कभी निर्मल नहीं होती।

**श्रिया विकारतां यातः परलोकं न पश्यति॥**

**विशेषेण श्रिया मत्तः पतनाय भवेदलम्॥ १८॥**

ऐश्वर्य के वश विकार के उत्पन्न होने पर परलोक दिखायी नहीं देता विशेषरूपेण धन के गर्व से मत्त मनुष्य अवश्य ही पतन के लिए पर्याप्त होता है।

**एतौ कुबेरतनयौ विष्णुधर्म्मपरायणौ ॥**
**नियतं भ्रष्टतां प्राप्तौ कुसङ्गफलतः परम् ॥ १९ ॥**

यह कुबेर जी के दोनों पुत्र पहले विष्णु धर्म परायण थे, निश्चित रूपेण यह कुसङ्गति के फल से ही भ्रष्ट हुए है।

**श्रीमदेऽतिप्रसक्तानां नूनं नरकयातनाः ॥**
**यतो भूतानि हन्यन्ते निर्दयैरजितात्मभिः ॥ २० ॥**

धन से गर्व करने वालों को अवश्य ही नरक की पीड़ा भोगनी होती है, क्योंकि उस समय मनुष्य निर्दयी और अजितेन्द्रिय होकर प्राणियों की हत्या करने लगते हैं।

**श्रिया मत्ताश्च जानन्ति विषयं परमार्थतः ॥**
**व्यवायाहारनिद्रादिष्वासक्ता मूढबुद्धयः ॥ २१ ॥**

लक्ष्मी के मद से उन्मत्त हुए मूढ़ बुद्धि वाले मनुष्य सांसारिकविषयों को परमार्थतः जानते हैं। मैथुन, आहार, तथा निद्रादि में आसक्त रहते है।

**मन्यन्ते देहमात्मीयं कृमिविड्भस्मसञ्ज्ञितम् ॥**
**भूतद्रोहेण पुष्यन्ति न विरक्ता भवन्ति हि ॥ २२ ॥**

कृमि, कीट तथा भस्मसञ्ज्ञित इस देह को अपना मानते हैं एवं सम्पूर्ण प्राणियों से द्रोह करके मनुष्य अपने शरीर का पालन करता है, उस समय वह कुछ भी विरक्त नहीं होता।

**न विदन्त्यात्मदुःखानि नरकेषु महान्ति वै ॥**
**अतो धिग्जीवितं तस्य यस्य श्रीमदसम्भवः ॥ २३ ॥**

नरक में जाकर वह अनेक दुःखों को भोगते हुए भी उन्हें जान नहीं पाते हैं। इस कारण जो मनुष्य धन से उन्मत्त है उनके जीवन को धिक्कार है।

**नैतादृशी मतिर्भूयो भवेदिह कथञ्चन ॥**
**एवमत्र मया कार्यमिति मे चिन्तितं हरे ॥ २४ ॥**

इस प्रकार की बुद्धि मेरी कभी नहीं हे हरि ! ऐसा आप उपाय बता दीजिए, मैं उस समय यह चिन्ता करने लगा कि यह मैंने क्या कर दिया।

**एतयोस्तरुजन्माशु न यत्र विषयोऽस्ति हि ॥**
**परं महावने रम्येऽतीते दिव्यशरच्छते ॥ २५ ॥**

तब इन दोनों ने ही अतिशीघ्रता से वृक्ष रूप होकर जन्म लिया जहाँ पर विषय हैं ही नहीं। पुनः सुन्दर महावन में दिव्य शत वर्षो के व्यतीत होने पर।

**श्रीकृष्णदर्शनं प्राप्य लब्धभक्ती भविष्यतः॥**

**श्रीकृष्णदर्शनं यस्मादेतयोर्भविता ध्रुवम्॥ २६॥**

श्रीकृष्ण जी का दर्शन पाकर इनके भक्ति उत्पन्न होगी, क्यों कि इनको निश्चय ही श्रीकृष्ण का दर्शन होगा।

**तरुयोनौ गतावेतौ नान्यत्कर्म्म करिष्यतः॥**

**ऋतुधर्म्मसहौ मूढौ भूत्वा द्वौ यमलार्जुनौ॥ २७॥**

ये दोनों, वृक्ष की योनि में गये और अन्य कुछ भी कार्य नहीं कर सकेंगे, वे दोनों ऋतु धर्म का सहन करने वाले मूढ यमलार्जुन हुए।

**परोपकारिणौ भूत्वा स्थास्यतो बहुकालतः॥**

**इति शप्त्वा गतोऽहं वै सत्यलोकमनामयम्॥ २८॥**

दूसरे उपकारों को करने के निमित्त चिरकाल तक खड़े रहेंगे ऐसी चिन्ता करके मैं इनको शाप देकर अनामय सत्यलोक को चला गया।

*श्रीभगवानुवाच*

**पूर्वभक्तिप्रभावेण विष्णोर्मम महामुने॥**

**भवतो दर्शनं जातं न यतोऽसद्गतिस्तयोः॥ २९॥**

श्रीभगवान् बोले कि हे महामुने ! पूर्वभक्ति के प्रभाव से ही उनको विष्णु अर्थात् मेरा और आपका दर्शन हुआ और इसीलिए उन दोनों की असद्गति नहीं हुई॥

**भोगान्तसमयेऽवश्यं महतां दर्शनं भवेत्॥**

**द्रुमयोरन्तरं नूनं दत्त्वोलूखलमाशु च॥ ३०॥**

भोग के अन्तिम समय में अवश्य महात्माओं का दर्शन हुआ करता है, मैंने तुम्हारे वचनों को सत्य करने के लिए शीघ्र ही यमलार्जुन दोनों वृक्षों के बीच में ऊखल को लटकाया।

**विना वर्षं विना वाते मया तौ पातितौ द्रुमौ॥ ३१॥**

बिना पवन और बिना वर्षा के उन दोनों वृक्षों को मैंने गिरा दिया।

**तरुणौ रूपसम्पन्नौ सर्वभूषणभूषितौ ॥**
**दिव्याम्बरधरौ दिव्यपुष्पमाल्यैरलङ्कृतौ ॥ ३२ ॥**

तब उन दोनों मे से दो सुन्दर पुरुष निकले वे दोनों ही युवा और अत्यन्त रूपवान् थे तथा सम्पूर्ण अलंकारों से भूषित मनोहर वस्त्रों को धारण किए हुए दिव्य फूलों की माला से अलङ्कृत थे।

**दण्डवत्पतितौ तौ तु कृताञ्जलिपुटावुभौ ॥**
**तावूचतुः कृष्ण कृष्ण महायोगिञ्जगद्गुरौ ॥ ३३ ॥**

वे दोनों पुरुष दण्डवत् प्रणामकर हाथ जोड़कर विनम्रतापूर्वक मुझसे बोले कि हे कृष्ण ! हे महायोगिन् ! हे जगद्गुरो !

**त्वया सृष्टमिदं विश्वं यदेतत्सचराचरम् ॥**
**तस्मिन्नेवांशभागेनानुप्रविश्यावभाससे ॥ ३४ ॥**

तुमने ही इस स्थावर जङ्गमात्मक संसार की सृष्टि की है, तुम्हीं इसमें अपने अंश को प्रविष्ट करके अवभासित होते हो।

**त्वमेव पालयस्येतत्त्वय्येवान्ते लयं ब्रजेत् ॥**
**मायागुणैर्भवत्येतत्तुभ्यमधिरोचते ॥ ३५ ॥**

इसका पालन करते हो अन्त में यह तुम्हीं में लय हो जाती है, माया के गुणों से वह सब होता है जो तुम्हें अच्छा लगता है।

**त्वद्रोमकूपे ब्रह्माण्डकोटयः परमाणुवत् ॥**
**ब्रह्मेन्द्राद्याश्च ये देवाः सप्रजापतयोऽखिलाः ॥ ३६ ॥**

तुम्हारे रोम-रोम में अनन्त कोटि ब्रह्माण्ड परमाणु विराजमान है, प्रजापति के साथ सभी ब्रह्मा और इन्द्रादि देवता।

**मनवो भुवि राजानो ये चान्ये त्वद्विभूतयः ॥**
**नारदानुग्रहादीश जातं नौ दर्शनं तव ॥ ३७ ॥**

मनु, पृथ्वी के समस्त राजा एवं अन्य जो तुम्हारी विभूतियाँ हैं, देवर्षि नारद जी की कृपा से हे ईश ! आज हमको तुम्हारा दर्शन हुआ है।

**अन्यथा विषये सक्तचित्तयोर्भविता कुतः ॥**
**यदेतदखिलं विश्वं क्रीडाभाण्डं तवेश्वर ॥ ३८ ॥**

नहीं तो विषय में आसक्त हुए चित्त वाले हम दोनों को आपके दर्शन का होना कैसे सम्भव हो सकता है हे ईश्वर! यह अखिल ब्रह्माण्ड आपके खेलने का पात्र है।

**त्वत्तो न भिन्नं किमपि सर्व्वं ब्रह्माण्डगोचरम्॥**
**अतश्चावां भगवतः पादाम्बुजसमाश्रयौ॥ ३९॥**

यह समस्त ब्रह्माण्ड जो दिखायी देता है यह आपसे कुछ भी भिन्न नहीं है, अतः हम दोनों आपके चरणकमलों के आश्रित हैं।

**प्रार्थयावो वरं शश्वद्भवतो दर्शनं शुभम्॥**
**भक्तिं देहि सदा देव निजनिष्ठं मनश्च नौ॥ ४०॥**

हम वर माँगते है कि सर्वदा हमें आपका दर्शन होता रहे हे देव ! हमें आप भक्ति दीजिए जिससे हमारा मन सर्वदा निजनिष्ठ रहे॥

**जिह्वा तवार्पितान्नेषु दृष्टिः साधुजनेक्षणे॥**
**त्वत्स्थानगमने पादौ गात्रं त्वद्भक्तसङ्गमे॥ ४१॥**

हमारी जिह्वा आप को अर्पित किये गये अन्न में आसक्त रहे और दृष्टि साधुओं के दर्शन में, दोनों चरण आपके स्थान में जाने के लिए तथा शरीर आपके भक्तों के साथ में रहे।

*श्रीभगवानुवाच*

**एवं सम्प्रार्थितस्ताभ्यामवोचं च कुबेरजौ॥**
**यदुक्तं तत्तथैवास्तु स्वलोकं यात मा चिरम्॥ ४२॥**

श्रीभगवान् बोले कि उनकी ऐसी प्रार्थना करने पर मैंने उन कुबेरपुत्रों से कहा कि तुम अपने लोक को शीघ्र ही यहाँ से जाओ जो तुम कहते हो वही होगा।

**युवयोः सङ्गमं येऽन्ये करिष्यन्ति धरातले॥**
**तेषां चाहैतुकी भक्तिर्भविष्यति न संशयः॥ ४३॥**

पृथ्वी पर जो मनुष्य तुम्हारा सङ्गम करेंगे, उन्हें अहैतुकी भक्ति होगी इसमें कुछ भी सन्देह नहीं है।

**साधुसङ्गाद्धि विमला भक्तिर्भवति नैष्ठिकी॥**
**भक्तिरेव परो लाभस्ततोऽन्यन्नास्ति किञ्चन॥ ४४॥**

साधुओं की सङ्गति होने से परमपवित्र नैष्ठिकी भक्ति प्राप्त हो जाती है, भक्ति ही एक परमश्रेष्ठ लाभ है इसके अतिरिक्त और कुछ भी नहीं है।

**भक्त्यैवाहं भवे वश्यो युवयोः सम्भवत्वलम्॥**

**इत्युक्तौ तु प्रणम्याशु तथा कृत्वा प्रदक्षिणाम्॥ ४५॥**

मैं भक्ति के द्वारा ही तुम्हारे दोनों के वशीभूत हुआ हूँ और यह पर्याप्त सम्भव हो सका है। मेरे ऐसा कहने पर वे दोनों प्रणाम और प्रदक्षिणा करके।

**ममाज्ञया सम्प्रयातौ कुबेरभवनं पुनः॥**

**गोपास्तु निनदं श्रुत्वा द्रुमयोः पतमानयोः॥ ४६॥**

मेरी आज्ञा के अनुसार कुबेर जी के घर को चले गये। इधर यमलार्जुन वृक्ष के गिरने के शब्द को सुनकर गोपगण।

**तत्रसुः शीघ्रमाजग्मुः पश्यन्तो मां सुविस्मिताः॥**

**कथमेतौ निपतितौ तरू चिरतरस्थितौ॥ ४७॥**

डर गये और अतिशीघ्र वहाँ आ पहुँचे मुझे देखकर आश्चर्य युक्त होकर कहा कि यह चिरस्थायी वृक्ष कैसे गिर गये।

**तत्र नन्दः समागत्य मुक्त्वा बालमुलूखलात्॥**

**आनीयाङ्कमथो चुम्बन्वदनं मुदितः परम्॥ ४८॥**

पिता नन्द जी भी वहाँ आये और मुझे ऊखल से खोलकर अपनी गोद में लेकर मेरे मुख को चूमकर अत्यन्त ही प्रसन्न हुए।

**अक्षतञ्च समालोक्य निजभाग्यमतर्कयत्॥**

**गोपाः परस्परं प्रोचुरद्भुतं किमभूदिह॥ ४९॥**

बालक को क्षतिरहित देखकर अपने को भाग्यवान् समझा, सभी गोप आपस में कहने लगीं, कि यह कैसा अद्भुत कार्य है।

**बालकोऽसौ मृत्युमुखे पतितो विधिनावितः॥ ५०॥**

यह बालक मृत्यु के मुख से गिरा है केवल विधाता ने ही इसकी रक्षा की है।

**इति मीमांसमानेषु गोपेषु पतितौ द्रुमौ॥**

**तानूचुर्बालकास्तत्र नन्दादीञ्छुद्धबुद्धयः॥ ५१॥**

इस प्रकार से आपस में वृक्षों के गिरने की मीमांसा कर रहे थे। इसी समय बालकों ने पवित्र बुद्धिवाले नन्दादि से कहा।

**उलूखलं कर्षयता कृष्णेनेमौ निपातितौ॥**
**ताभ्यां विनिर्गतौ देवौ कृशानुसदृशौ शुभौ॥ ५२॥**

कृष्ण ने ऊखल को खींचकर इन दोनों वृक्षों को गिरा दिया है। यमलार्जुन के गिरते ही उनमें से अग्नि के समान प्रताप वाले दो सुन्दर पुरुष निकले।

**स्तुत्वा नत्वा उपामन्त्र्य गतावात्मनिकेतनम्॥**
**बालानां वचनं केचिज्जगृहुर्नेति केचन॥ ५३॥**

तुम्हारे इस पुत्र की स्तुति नमन तथा उपामन्त्रणा करके वे अपने स्थान को चले गये, बालकों की इस बात को किसी ने माना और किसी ने माना ही नहीं।

**स्मृत्वा पूर्वकृतं कर्म केचित्सत्यं च मेनिरे॥**
**सन्दिग्धचेतसः केचिद्बभूवुस्ते व्रजौकसः॥ ५४॥**

कोई-कोई मेरे प्रथम किये हुए चरितों को स्मरण कर सत्य मानने लगे, कोई-कोई व्रजवासी सन्दिग्ध चित्त वाले हो गये।

**नन्दाद्या व्रजगोपाश्च यशोदाद्याश्च गोपिकाः॥**
**पश्यन्तो मा कुशलिनं मोदमापुरसीमकम्॥ ५५॥**

नन्दादि समस्त व्रजवासी गोप और यशोदा आदि गोपियों ने मुझे सकुशल देखकर असीमित आनन्द प्राप्त किया।

**नन्दो महामनास्तत्र द्विजानाहूय श्रद्धया॥**
**ददौ दानानि सुभृशं ब्राह्मणेभ्यः समन्ततः॥ ५६॥**

महाभाग नन्द जी श्रद्धा के साथ ब्राह्मणों को बुलाकर उनको सब तरफ से अनेक प्रकार के दान देने लगे।

**यशोदा पूर्ववत्त्रस्ता रक्षाविधिमकारयत्॥ ५७॥**

यशोदा जी ने पहले के समान डरते हुए रक्षा का विधान करवाया।

**इदं मया ते कथितं महादद्भुतं बाल्ये वयस्यैश्चरितं मया यत्॥**
**शृणोति यः श्रावयते च भक्तिरनुग्रहो मे भवतीह तस्मिन्॥ ५८॥**

मैंने बचपन में मित्रों के साथ बड़े-बड़े अद्‌भुत कार्य किये है जो मनुष्य भक्तिपूर्वक इस पुराण को सुनता अथवा सुनवाता है उसके ऊपर मेरा अनुग्रह तथा भक्ति रहती है।

*इति श्रीसकलपुराणसारभूते आद्युपपुराणे वैयासिके नारदशौनकसंवादे यमलार्जुनमोक्षवर्णनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥*

*सकलपुराणसारभूत वैयासिक आद्युपपुराण में यमलार्जुनमोक्षवर्णन नामक उन्तीसवाँ अध्याय समाप्त।*

# आद्युपपुराणेऽकारादिश्लोकानुक्रमणी

## अ

## आ

## ई



## उ

## ऐ



## ओ



## क

## क्ष

## ज



## ज्ञ



## ड



## त

**द**

## भ

**म**

## ल

## व

## श

## स

## ह

# ALL MAHAPURANAS

Text with Shloka Index & Introduction

**Agni Mahapurana**
664 pp 500.00

**Bhagavata Mahapurana-**
4vols 2304 pp Set 1800.00

**Bhavishya Mahapurana**
3vols 1400 pp Set 1500.00

**Brahma Mahapurana**
728 pp 500.00

**Devi Bhagavata Mahapurana**
1154 pp 800.00

**Ganesha Purana**
832 pp 1993 500.00

**Garuda Mahapurana**
668 pp 500.00

**Harivansha Purana**
मूल, हिन्दी अनुवाद तथा श्लोकानुक्रमणी सहित
1802 pp 2vols set 1000.00

**Kurma Mahapuran**
298 pp 400.00

**Linga Mahapurana**
774 pp 400.00

**Markandeya Mahapurana**
मूल, हिन्दी अनुवाद तथा श्लोकानुक्रमणी सहित
828 pp 500.00

**Narada Mahapurana**
932 pp 600.00

**Padma Mahapurana**
2381pp 4vols set 2000.00

**Shiva Mahapurana**
1504 pp 2vols set 1000.00

**Shiva Mahapurana** (Small Type)
412 pp 500.00

**Skanda Mahapurana**
5600 pp 8 vols set 4000.00

**Skanda Mahapurana** (small type)
1452 pp 3vols set 2000.00

**Vamana Mahapurana**
472 pp 400.00

**Vayu Mahapurana**
540 pp 500.00

**Vishnudharmottara Mahapurana**
1246 pp 900.00

**Vishnu Mahapurana-with two commentaries**
680 pp 500.00

**विष्णुमहापुराण**
मूल, हिन्दी अनुवाद तथा श्लोकानुक्रमणी सहित
—डा० श्रद्धा शुक्ला
pp. 1000 2 vols Rs. 225.00

**मत्स्य पुराण**
मूल, हिन्दी अनुवाद तथा श्लोकानुक्रमणी सहित
—डॉ० श्रद्धा शुक्ला
Demy 1/8 2 vols set Press

**Ekamara Purana**
490 pp 150.00

**Kalki Purana**
316pp 120.00

**Kuber Purana**
(Text With Study) pp 752 Rs.140.00

**Narasimha Purana**
380 pp 100.00

**Saura Purana**
290 pp 100.00

**Srimadbhargavopapuranam**
—Brijesh Kumar Shukla
pp 348 Rs. 124.00

**Vasuki Purana**
260 pp 100.00

**Ashtadasha Purana Darpana Contents of 18 Puranas**
432 pp 180.00

## PURANAS WITH TEXT, TRANS & NOTES IN ENGLISH VERSWISE

**Vishnu Purana**—*H.H. Wilson*
1065 pp 2 vols Set 600.00

**Matsya Purana**—*N.S. Singh*
1252 pp 2 vols 600.00

**Narasimha Purana** —*Dr.S.Jena*
750 pp 400.00

**Kalika Purana**
*Prof. Biswanarayan Shastri*
1770 pp 3vols set 900.00

**Shiva Purana (Uttara Khanda)**
(Text with Eng. Trs. & Introduction)
Demy 1/8 pp 818 Rs. 152.00



NAG PUBLISHERS
11/A (UA) Jawahar Nagar, Delhi - 110007 (INDIA)